# SRI VAIDEHI VIVAHAM

with a Preface

by

**Sri K. SANTANAM**
Ex-Governor of Vindhya Pradesh

by

Maha Mahopadhyaya Panditaraja
Sastra Ratnakara

K. S. KRISHNAMURTI SASTRI
(Former, Poet Laureate, Madras State)

**1959**

PUBLISHED BY

**K. S. KRISHNAMURTI SASTRI**

**No. 15, VI Main Road, Raja Annamalaipuram, MADRAS.**

|| श्रीरस्तु ||

# || श्रीवैदेहीविवाहम् ||

विन्ध्यप्रदेशराज्यपालपदान्निवृत्तस्य

श्री. के. सन्तानम् महाशयस्य

आमुखेनालङ्कृतम्


महामहोपाध्याय, पण्डितराज, शास्त्ररत्नाकरादि बिरुदभाजा

मद्रप्रान्तास्थानविद्वत्कविपदमलङ्कृतवता

## के. एस्. कृष्णमूर्तिशास्त्रिणा


प्रणीतम्


प्रकाशक :

के. एस्. कृष्णमूर्तिशास्त्री राजा अण्णामलैपुरम् मदरास् - 28.

मूल्यम् रू. २–८–०

॥ श्रीः ॥

श्रीमत्परमहंस परिव्राजकाचार्यवर्य
श्रीमच्छङ्करभगवत्पाद प्रतिष्ठित
श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु
श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादैः

काड्डुप्पुत्तूरभिजन श्रीमद्वेङ्कटसुब्बरामतनुजन्मने शास्त्ररत्नाकर महामहोपदेशक पण्डितराज कविकोकिल महामहोपाध्यायादिनैकविरुदाङ्किताय भूतपूर्वमद्रास्थानकवये श्रीकृष्णमूर्तिशास्त्रिणे क्रियते नारायणस्मृतिः—

भवता विरचितं श्रीवैदेहीविवाहाख्यं गद्यकाव्यं श्रीमद्रामायणबालकाण्डकथां वैदेहीविवाहप्रधानां विद्वज्जनमनोरञ्जनेन गभीरभावपरिभास्वरेण गुणगणपरिपूर्णेन प्रासाद्यलङ्कारपरिभूषितेन वर्त्मना वर्णयन्महाकवि श्रीबाणादिकृत्यनुकारि सहृदयहृदयाह्लादजनकं श्रीरामचन्द्रभक्तिप्रवर्धकश्च भूयादित्याशास्महे ॥

विजययात्रास्थानं नूम्बल्
विकारिभाद्रपदशुद्धसप्तमी

नारायणस्मृतिः

# PREFACE

BY

Sri K. Santhanam, Ex-Governor Vindhya Pradesh

Though Sanskrit ceased to be the spoken language of the people of any part of India, thousands of years ago, it continued as the language of knowledge, culture and the vehicle of inter-communication between scholars throughout the country till recent times. There were, therefore, many scholars in every partof the country who could function in this ancient language as freely and effectively as many Indians do now in English. For the last thousand years, the South has had probably more of them than even North India.

Maha Mahopadhyaya Krishnamurti Sastrigal is a scholar of this type which has unfortunately become very rare now-a-days. He is an author of repute in Sanskrit. Of his published works, "Prakriti vilasa" consisting of descriptive poems about the beauties of nature, "Stavaratnatraya" in praise of Godess Saraswati, Godess Lakshmi and Lord Vishnu and "Saticharita" which narrates the story of Savitri and Satyavan deserve to be mentioned.

All these three works were in verse which has been the usual medium of Sanskrit authors. The present work Sri Vaidehi Vivaha is a Prose Epic. I understand that this was composed while the author was ordered to take rest by his Doctor during a recent illness. At his ripe age, it was natural for him to turn to the great and inspiring story of Rama as told by the immortal poet Valmiki. The present volume takes the story only upto the marriage of Sita. It is composed in the Jewelled prose style of kadambari and Dasa-Kumara Charita. This kind of prose is a special and fascinating development of Sanskrit, combining the beauties of both prose and poetry. It offers remarkable facilities for filling the ears with sonorous phrases, pleasing the mind with rich fancies and producing a dreamy and ecstatic effect. It is not easy to handle this form of composition without becoming unduly difficult and obscure. Sri Krishnamurti Sastrigal has succeeded remarkably in avoiding these pitfalls and producing a work which can be read with ease while the compound phrases roll along beautifully. He has generally followed Valmiki, but whenever he found it necessary for his literary purposes, he has added many details of his own. He has also taken this opportunity to quote from the vedas and other sacred books to bring out the spiritual truths underlying the Ramayana.

Works composed in this kind of jewel-prose should be read slowly in order to appreciate their full effect. Even those who are saturated with Valmiki's Ramayana will find it a pleasurable relaxation to read daily a page or two of this work. It is to be hoped that this attempt to re-tell the Ramayana in prose will meet with sufficient appreciation from all lovers of Sanskrit to induce the author to cover the other Kandas.

(Sd) .........
K. SANTHANAM

2-10-59.

## ॥ श्रीगोश्रीमहाराजाऽभिनन्दनम् ॥

महामहोपाध्यायबिरुदालङ्कृतैः, पण्डितराजपदाधिरूढैः, मद्रनगरीयास्थानविद्वत्कविपदमधिष्ठितवद्भिः, शास्त्ररत्नाकरैः, कविकोकिलैर्विशेषतो मत्प्रणयपात्रैः श्री. के. एस्. कृष्णमूर्तिशास्त्रिभिः प्रणीतः प्रेम्णा मह्यं प्रेषितश्च श्रीवैदेहीविवाहाख्यः संस्कृतगद्यग्रन्थः सादरं व्यलोकि मया। रामायणकथा तावदनेकैः कवितल्लजैः श्रव्यकाव्यरूपेण दृश्यकाव्यरूपेण चम्प्वात्मना च निबद्धा बहुलमुपलभ्यते। प्रौढगद्यकाव्यरूपेण तु नाद्ययावत्केनाप्यनुवर्णिता सा। वस्तुतस्तु गद्यमेव कवीनां निकषोपलः। तस्मिन्निकषपाषाणे परीक्षितेषु कविषु कादम्बरीहर्षचरितयोः कर्ता बाणभट्ट एवात्मनः समुत्कर्षं प्रकाश्याग्रिमं स्थानमधितिष्ठति। बाणभट्टादनन्तराः कवयस्तु तस्य तुलामारोढुमशक्तमात्मानं पश्यन्त इव नैव गद्यप्रबन्धप्रणयने यत्नमकार्षुः।

श्रीकृष्णमूर्तिशास्त्रिभिः प्रणीतमिदं गद्यकाव्यं बाणस्य प्रतिबाण इव प्रतिभाति। सर्वात्मना बाणभट्टस्य शैलीमनुकुर्वन्तः श्रीकृष्णमूर्तिशास्त्रिणस्तेन सह समानासिकामर्हन्ति। बाणादन्ये कवयः काणा इत्येषा कविलोकप्रसिद्धाऽपप्रथा शास्त्रिभिरिदानीं परिमृष्टेति निश्चप्रचं ब्रूमः। कादम्बरीहर्षचरितयोरिव काव्येऽस्मिन्वक्रोक्तिः प्रकटमनुभूयते। श्लेषस्य श्लेषालिङ्गितानामलङ्कारान्तराणाञ्चोपनिबन्धे शास्त्रिणां नैपुणी परभागमारुह्य शोभते। तथाहि—साकेतवर्णनावसरे, श्रीरङ्गशायिनेव कमलाशयोल्लसितपादमूलेन, धूर्जटिनेव परिगृहीतचन्द्रिरेण, नर्तकेनेव निजबहुलास्यदरीदृश्यमानजीवलोकेन, समासविशेषेणेव विभाषावरुद्धेन, पाणिनिसूत्रेणेव निपतितबहुलशब्देन, प्राकृतव्याकरणेनेव व्यक्तधातुवर्णव्यत्यासेन, वैशेषिकदर्शनेनेव सद्द्रव्यविशेषसमवायेन, कापिलतन्त्रेणेव प्रकृतिरमणीयेन, त्रिविष्टपेनेव हरिहयसमाक्रान्तेन, जीमूतवाहनेनेव नागानन्दाय परिकल्पितनिजकळेबरसमर्पणेन, आखण्डलेनेव समादृतचित्रशिखण्डिजमधुरवचनेन, दुष्यन्तेनेव समनूदितनिजासक्तशकुन्तलालप्यमानवचनेन, यूपस्तम्भेनेवाजगरसम्बद्धेन महीध्राणां सहस्रेण परिवृताभिः, एवं दशरथवर्णनावसरे—वेद इव समर्थवादो ब्राह्मणभक्तिमांश्च, आर्यलक्षणोऽप्यनार्यलक्षणः, अमार्गमदहार्यपि सन्मार्गमदहारी, सकलत्रोऽपि विकलत्रः, वितरणशूरोऽप्यवितरणशूरः—इत्यादिषु श्लेषः श्लेषमूलको विरोधश्च सहृदयानां हृदयान्यावर्जन्ति। अत्र केचन श्लेषाः पूर्वैः कविभिरचुम्बिताः शास्त्रिणां श्लेषालङ्कारघटने निरतिशयां चातुरीं व्यञ्जन्ति।

एवं विश्वामित्राभ्यागमप्रघट्टे—"श्रीरामादइउणित्याद्यक्षरसमाम्नायसमाम्नायमानादक्षरात्परमपुरुषान्नारायणादेरिव नेन्द्रस्य परस्यापि पारम्यम्" इत्यादीन्यनेकानि पाणिनिसूत्राणि श्लिष्टार्थपरतया प्रयुक्तानि विदुषां चेतांसि रञ्जयन्ति।

वैदेहीविवाहाख्येऽस्मिन्काव्ये बालकाण्डोक्ताः सर्वे विषयाः सविमर्शमनुवर्णिताः। न केवलं कथाभागा एव किन्तु अध्वरपारम्यादयो विषयाः शास्त्रीयैर्युक्तिवचनैः प्रतिपाद्यन्ते। श्रीरामस्य तारकब्रह्मत्वं कृष्णाद्य

वतारान्तरापेक्षया समुत्कृष्टत्वञ्च सोपपत्तिकं समर्थितम् । शैवस्य धनुषः शुल्कत्वेन परिकल्पने हेतुभूता साम्प्रदायिकी कथा काचित्काव्येऽस्मिन्नुपन्यस्ता । दशरथसाम्राज्यस्य जानराज्यत्वमुपवर्णयता कविना जानराज्यस्याधुनिकत्वाभिमानः केषाञ्चित्परास्तः । अहल्याया दुर्वृत्तत्वशङ्का सयुक्तिकं व्युदस्ता । आकाशगङ्गाया गतिवैखरीं तथा स्वतः पवित्रायाः शङ्करसम्बन्धात्पवित्रतरत्वं भारतभूमिसम्बन्धात्पवित्रतमत्वं चानेकैः दृष्टान्तैः स्फोरयन्नयं कविरभिव्यनक्ति स्वस्य निरतिशयां देशभक्तिम् । राजनीतिर्जानक्याः सखीभिरलङ्करणमित्यादयो रामायणबहिर्भूता विषयाः केचिदत्रोट्टङ्किताः सुधीभिरवश्यं परिशीलनीयाः । एवं विविधविषयविचारपरस्य वैदेहीविवाहाख्यस्यास्य ग्रन्थस्य "रामायणमीमांसे"ति नामकरणं सुवचं प्रतिभाति । अनयैव सरण्या समग्रं रामायणं गद्येनानूद्यमानं विपश्चितामानन्दाय कल्पेत ।

शास्त्रिणां भाषारीतिस्तावदन्यादृशी प्रौढा क्षोदक्षमा च । प्रायो नारिकेलपाक एवानुभूयते सर्वत्र । अनुप्रासः शास्त्रिणां प्राणायमानो दृश्यते । प्रायेण वाक्यानि दीर्घाणि समस्तपदजटिलानि च । अथापि लालित्यं नैव परिहीयते । लुङ्यङ्यङ्लुगन्तसन्नन्तरूपैराकीर्णं दृश्यते काव्यमिदम् । नायं ग्रन्थोऽव्युत्पन्नमतीनां बालकानां विहरणाङ्गणम् । किन्तु विदुषामेव प्रमोदावहः, व्युत्पित्सूनामुपकारकश्च । अद्यत्वे एतादृशानां गद्यकाव्यानां प्रबन्धारो विरलाः । वाचयितारश्च विरलतराः तथापि इदं तावत्प्रार्थयते —

श्रीवैदेहीविवाहाख्यनव्यकाव्यसुमासवम् ।
आस्वादयन्तो मोदन्तां चिराय रसिका जनाः ॥

इति, तत्रभवतां भवतां प्रेमलाभधन्यः परीक्षिदपराख्यो
**रामवर्मा श्रीगोश्रीमहाराजः ॥**

**His Highness**
**Sri**
RAMA VARMA
(PARIKSHIT TAMPURAN)
**Maharaja of Cochin**
CAMP – Kanjirappilli Palace Periyaram P.O.
5—10—59

# FOREWORD

BY

Sri K. Balasubramania Aiyer, M. L. C.

Brahmasri Krishnamurti Sastrigal is a well known Sanskrit Scholar of our State. He has written many works of Samskrit Poetry and Prose. He was appointed as the State Poet of Madras for the Sanskrit language when the system of appointing State Poets was adopted for some time by our Government. He was conferred the great honour of Mahamahopadhyaya by the Government of India in recognition of his profound Scholarship and of his distinction as an author of many good and popular Granthas. He has a mastery over the Samskrit language, being well versed in Sanskrit grammar and idiom. The present work known as 'Shri Vaidehi Vivaha' is written in good grammatical, rich and fluent Samskrit style. One may think that the subject is a trite one, not admitting of any display of originality. But in our country, the Ramayana has such a hold over the imagination of our people and has such a profound influence on the minds of scholars and thinkers that many poets have often irresistibly turned to the story of Rama for their inspiration and for the play of their genius. Great poets like Bhasa, Kalidasa, Bhavabhuti, Murari, Rajasekhara and Ramabhadra Dikshit and many other lesser poets have had the plots for their dramas and the subject for their compositions culled from the incidents of the Ramayana. The great Alankarika Abhinava Gupta Acharya, justifies this tendency among poets by very correctly pointing out that poets are enabled to capture the 'Sahrdayatva' of their readers and audiences by taking advantage of the story of Rama which, as soon as it is heard, rouses in us the feelings of aesthetic appreciation and enjoyment. The poet Murari beautifully expresses it as 'Guṅanām Avaguṅāh'. Therefore no apology is needed for Sri Krishnamurty Sastri for having taken as the theme of his work the story of Rama's birth leading up to his marriage with Sita. Many poets have taken liberties with the story as narrated by Valmiki and added inventions of their own, but Sri Krishnamurti Sastrigal has resisted from any such attempt and has been faithful to the original. As time passed on since the days of Valmiki, the Ramayana made a profound impression upon the minds of generations of our country-men and it soon became a source book for our culture and thought and Rama became the object of intense devotion and inspiration to many distinguished saints and seers. It is from this stand-point that our author has approached the story and has enriched his work with quotations from the Upanishads establishing the 'Parabrahmatva' of Rama especially in the chapter of Sri Rama Jananam.

Two kinds of prose style have been current in Samskrit literature, one which follows the lead of the prose sentences contained in the Brahmanas of the Veda and in the

Mahabhashya of Patanjali, namely, short, simple and lucid sentences. The other style is one of richness and ornateness, full of alliterations and samasa compounds, which has been described as having the quality of Ōjas, by the great Alankarika Acharya Dandin. It is this latter style that our author has adopted successfully.

I have very great pleasure in commending this book as very profitable and interesting reading to the Samskrit knowing public. It is fit to be also a Text Book for the higher Sanskrit classes and examinations.

Asramam,<br>Mylapore.<br>8-11-59

(Sd.) K. Balasubramania Ayer.

# AUTHOR'S NOTE

I have long cherished a desire to retell the Ramayana in Gadya form in Sanskrit. Nearly two decades ago I commenced a work and eight pages were published in some Journals. His Holiness the late Chandrasekhara Bharathi Swamigal of Sringeri Peeṭha who happened to see the piece expressed great appreciation of it and urged me to complete it. Some scholars and friends also desired me to continue the work. Owing to various distractions I could not pursue the work. It was only in March last that the injunction of the late Jagadguru came insistently to my mind and I resumed the work. My plan was to retell the Balakanda upto Sita's wedding under the title "Vaidehi Vivaha". In accordance with the wishes of the late Jagadguru, I decided to adopt, so far as it lay in my power, the grand gilded style of "Bana Bhatta" in which the first piece was written.

2. I was, however, troubled by the thought as to how I should ever get the book printed and published after completing it. I broached the subject to a friend and benefactor Sri T. S. Narayana Iyer chartered Accountant, Bangalore who readily and most generously offered to bear the entire cost of the work. This gave me a fresh impetus and I set to work on the composition with diligence.

3. There was a fresh obstacle now. All of a sudden, I had a severe heart attack and I had to suspend work for some time. I recovered from the disease through the kind ministrations of another good friend Dr. T. N. Krishnaswami Iyer, Kutcheri Road, Mylapore. While I was in my convalescence, the Doctor advised me that though I should restrict my physical movement I could carry on with my literary work. I began the work again in right earnest and completed it in three months. It is my earnest belief that my recovery and the completion of the work was all due to the grace of Sri. Ramachandra.

4. I sent each part to the Press as I wrote it. I corrected the proofs myself and as I was not in a very good state of health some mistakes crept in. After the work was compiled in Book Form my friend Vidyasagar Sri. K. L. Vyasaraya Sastrigal, Retired Sanskrit Lecturer, Presidency College, Madras, was kind enough to go through the book and bring to my notice some mistakes. All these have been included in the errata appended and I request reviewers to kindly go through them before offering comments.

5. It remains for me to express my grateful thanks to:

(1) His Holiness Sri Jagadguru Sankaracharya Swamigal of Kamakoti-peeṭha for blessing the work with his Srimukha.

(2) Sri K. Santanam ex-Governor of Vindhya Pradesh who has been kind enough to write a Preface for the work in English.

(3) His Highness the Maharaja of Cochin who has been pleased to provide an esteemed and invaluable "Abhinandanam". and

(4) Sri K. Balasubramania, Iyer, M.L.C. for his learned and appreciative foreword.

6. I must once again express my gratitude to Sri. T. S. Narayana Iyer for his constant encouragement and generous help in getting the work printed. I must also express my warm appreciation of the services of the Proprietor Rathnam Press, Printers, George Town, Madras, who got the work printed, with remarkable promptitude accuracy and neatness.

7. The eminent persons who have written the Preface have suggested that I should write the entire Ramayana in the same form. Needless to say further continuation of the work will depend on the encouragement and appreciation I receive at the hands of the Public and also on whether any state aid would be forthcoming for embarking on a work of such magnitude.

Bharadwaj
No. 15, VI Main Road,
Raja Annamalaipuram,
Madras,
9—11—59.

K. S. K. SASTRI



**"Dharmika-Sarvabhauma"**
T. S. Narayana Iyer
Chartered Accountant

टि. एस्. नारायणार्यः सुचिरसुचरितस्तोम एको वपुष्मा-
न्विद्वद्वृन्दाभिगम्यः स्फुरुदुरुगरिमा स्वार्जितश्रीसमृद्धः ।
कारुण्यार्द्रान्तरङ्गःप्रकृतिशुभमतिर्दीनरक्षैकदीक्षः
सच्चारित्रोऽच्छकीर्तिर्जयति वितरणे कोऽपि चिन्तामणिर्नः ॥१॥

अनन्तनारायणशर्मणायं कौण्डिन्यगोत्री यजुराख्यशाखः ।
तिथावमायां स्थिरवासरेऽनुराधायुते वृश्चिकमासि वर्षे ॥ २ ॥

शुभकृत्यनन्तसुब्रह्मण्यस्याद्वैतविद्वदग्रयस्य ।
साध्व्यां सीतालक्ष्म्यां तलयूर्ग्रामे प्रसूत एष महान् ॥ ३ ॥

अस्याधीतवतोऽधिशैशवमुदक्श्रद्धं पितुः संस्कृतं
गायत्री स्वयमैद्धत ! स्मृतिपथं कालोपनीतात्मनः ।
पश्चादाङ्ग्लकलामधीत्य कुतुकादुद्योगभागास्त च
श्रीमन्मद्रपुरेऽसकृत्परिचितश्रुत्यन्तविद्यः सुधीः ॥ ४ ॥

अरविन्दयोगमार्गे रसिकः सम्प्राप्तयोगदीक्षोऽयम् ।
विस्मृतलोकव्यवहृतिराभात्कतिचिद्दिनानि सुसमाधौ ॥ ५ ॥

नटराजताण्डवं श्रीमार्कण्डेयापदानमसमानम् ।
अनुभूय देवतान्तरदर्शनमन्ते ददर्श ललिताम्बाम् ॥ ६ ॥

द्रविणैर्ललितासदनं रम्यं निर्माय निर्ममोऽमायम् ।
लोकक्षेमं कलयञ्जीवन्मुक्तः कलौ युगेऽपीन्धे ॥ ७ ॥

कामं धार्मिकसार्वभौमपदवीमस्मै समभ्यर्हते
कारुण्यादुपकारकाय कृतयेऽप्यस्यै प्रदात्रे श्रियः ।
श्रीनारायणशर्मणे गुणगणैर्मान्याय धन्यात्मने
कृत्वाप्यर्पणमात्मनः शुभकृते कार्तज्ञ्यमावेदये ॥ ८ ॥

अव्यादव्याजसौजन्यपर्जन्यो जानकीसखः ।
टि. एस्. नारायणं चायव्ययसंशोधकं प्रभुम् ॥ ९ ॥

ॐ तत्सत् ॥

—: * :—

एतद्ग्रन्थकर्तुः कृष्णमूर्तिशास्त्रिणः प्रथमे गुरुचरणाः
पूज्यपादा ब्रह्मश्रीयुताः समनुग्राहका भूवराहाचार्याः ॥



श्रीमत्कोल्लडतीरस्थहनुमन्तपुरं श्रितः ।
दशग्रन्थिहनूमन्ताचार्यो यस्तस्य चात्मजः ॥

साहित्यामृतवारिराशिरसमाद्गोपालशास्त्रीश्वरा-
लब्धव्याकरणोऽतिपाणिनिमुनेः पञ्चाननो द्वैतिनाम् ।
प्रेम्णाध्यापनपद्धतावनुपमो वाग्मी समर्घ्यो गुणै-
रिन्धे भूरि हि भूवराहगुरुसम्राड्गर्भपुर्यामयम् ॥

श्रीवैदेहीविवाहाख्यमेतदङ्घ्रिसरोजयोः ।
भक्त्या समर्प्यते काव्यं मयेदं कृष्णमूर्तिना ॥

ॐ तत्सत् ॥

॥ श्रीः ॥

॥ श्रीरामचन्द्राय परस्मै ब्रह्मणे नमः ॥

# श्री वैदेहीविवाहम्

## गद्यकाव्यम्

ॐ नमः प्रणवरूपिणे प्रणतभक्तसंरक्षिणे
त्रयीवनविहारिणे त्रिदशवैरिसंहारिणे ।
कलाधरवतंसिने कलिमलैकविध्वंसिने
पुराणवरदन्तिने पुरभिदङ्गनानन्दिने ॥ १ ॥

श्रीवैदेहीविवाहाख्यं काव्यं कर्तुं ममोद्यतः ।
विघ्नं विहन्तु विघ्नेशः प्रसीदतु सरस्वती ॥ २ ॥

अनुगृह्णातु भगवान्वाल्मीकिः प्रथमः कविः ।
यस्मात्प्रादुरभूद्रामकथामृतसुरापगा ॥ ३ ॥

व्युत्पत्तिमिच्छतां प्रीत्यै हर्षाय विदुषां तथा ।
स्निग्धैश्च संस्कृतैः शब्दैः कुर्वेऽहं गद्यपद्यया ॥ ४ ॥

महामहोपाध्यायोऽयं मद्रास्थानकविः सुधीः ।
शास्त्ररत्नाकरः कृष्णमूर्तिर्निर्माति सत्कृतिम् ॥ ५ ॥

महाकवीनां वाक्यानि पञ्चषाणि लघूनि च ।
रत्नानीव सुवर्णेऽत्र दीप्येरन्सहृदां मुदे ॥ ६ ॥

श्रीमद्दाशरथेश्चरित्रमतनोत्क्षेमेन्द्रनामा कविः
वल्मीकर्षिरिवापरः सुललितैः श्लोकैश्च काश्मीरिकः ।
केचिन्नाटकरूपमुच्चवचनैर्भोजोऽपि चम्प्वात्मना
वैदेहीपरिणीत्यवध्यभिदधे गद्यैर्विभिन्नात्मभिः ॥ ७ ॥

भारद्वाजकुलाब्धिशीतकिरणः श्रीकृष्णमूर्तिः कविः
श्रीमद्वेङ्कटसुब्बरामतनुभूर्विद्वाञ्श्रुतीनां शिरः ।
मान्यश्रीशिवदण्डपाणिमखिराट्छात्रश्च शिष्यान्वितः
भक्त्युन्मेषवशात्स्वयं वितनुते सीताविवाहं शुभम् ॥ ८ ॥

धर्म्यां प्राच्यकलाचारसंस्कृतिं शर्मदायिनीम् ।
वक्ष्येऽनुषङ्गात्काव्येऽस्मिन्त्रसास्वादाविरोधतः ॥ ९ ॥

विलम्बिवत्सरे मासि माकरे बुधवासरे ।
द्वादश्यां विशदायाश्च कृतिः प्रस्तूयते मया ॥ १० ॥

ओम्अथ ॥ भगवान्वाल्मीकिस्तपस्स्वाध्यायाभ्यामभ्यर्हितममर्त्यमुनिं नारदं परिपप्रच्छ । अद्यत्वेऽस्मिँल्लोके कोऽन्वसावस्ति महापुरुषः ? यः समग्रं विज्ञाय धर्ममनुष्ठानेन वपुष्मानिव स्फुरति कोऽपि सदाचारसमुदयः । यश्च पवित्रश्चारित्रेण, जितक्रोधमात्मवत्तया सत्यं दया वीर्यं शौर्यं धैर्यमौदार्यमित्येवमादयो गुणाः सम्भूय मणय इव महार्णवमाश्रयन्ते शरणम् । यस्मात्सङ्ग्रामे जातरोषाद्दिविषदोऽपि भृशं बिभ्यति । महर्षे ! पुरुषमेवंविधं ज्ञातुं त्वमेवासि समर्थः । ब्रूहि श्रोतुं मे महदस्ति कौतूहलमिति ।

एवमनुयुज्यमानो वल्मीकजन्मना मुने ! बहवः खलु वै गुणाः प्रकीर्तिता भवता ; ते च नैकस्मिन्पुंसि सुलभा इति प्रतिभातीति वदन्नेव नारदः सत्यलोके शतशः शतकोटिप्रविस्तरस्य रामायणस्य श्रवणेन तत्क्षणं श्रीरघुपतिरूपेण स्मरणसरणिमवतीर्णं स्वयमनुसन्दधे श्रीलक्ष्मीरमणम् । जहर्ष च दिविषदृषिः अहो ! महदिदं भागधेयं, धन्यतमोऽस्मि संवृत्तः ; यदर्हत्तमाय महातपस्विने पृष्टवते च विष्टरश्रवसो धर्मसंस्थापनकृते कृतमर्त्यावतारस्य कल्याणगुणानक्षीणान्भणितुं लब्धः कोऽपि सन्दर्भ इति ।

अनुपदमनुपममुपनिषदेकसमधिगम्यं नारायणाख्यं परं ब्रह्मैव श्रीराम इति नाम्ना केनापि दिव्यमङ्गळविग्रहरूपेण च प्रादुर्भूय, प्रदर्श्य लीलाविशेषानमानुषान्निर्वर्त्य च कृत्यमात्मनीनमवतारस्य स्वं धाम परमं जगाम साकं साकेतवासिभिरिति तत्त्वमुपदेष्टुमनाः, मुने ! भवदुक्तेभ्योऽप्यभ्यधिकैः कल्याणगुणैर्नित्यसमृद्धं बुद्ध्वा ब्रवीमि, श्रूयतां तादृशो नर इत्युदीरयन्निक्ष्वाकुवंशे सुमहति भगवतोऽमूल्यस्थूलमुक्ताफलकल्पं प्रभवमभूतपूर्वमवाङ्मनस-

गोचरश्च प्रभावमुपक्रममाणश्चारुतरं रघुनाथचरितं सङ्क्षेपेण निरूप्य परिसमापयांबभूव फलश्रुत्या समं सुमनोहरैर्गिरां प्रकरैः ।

यथाविध्यर्चितः सुरमुनिरप्यनुगृह्य वाल्मीकिं विहितश्रवणं वीणया गुणान्विष्णोर्गायन्नेव गगनं जगाम । अथ भगवान्वल्मीकप्रभवः साकं भरद्वाजेन शिष्येण विष्णुपद्या अविदूरे स्यन्दमानां नदीमाससाद तमसाम् । भरद्वाज ! जलमस्याः पश्य तमसायाः । अकर्दमतया मानसमिव साधूनां सुप्रसन्नं मानसं मे हरति । माभून्माध्याह्निकसमयातिपातः । गङ्गामगत्वा पवित्रामिमामेव सोऽहमवगाहिष्ये, आहर वल्कलं कमण्डलुने-त्यादिदेश ।

तथैव कृतवत्यन्तेवसति गृहीत्वा तद्धस्ताद्वल्कलं, भगवत्या मातुः प्रकृत्या अक्षीणविहारेण हृदयहारिणि तरङ्गिण्यास्तीर एव साफल्यमक्ष्णोर्विन्दमान इव काननकामनीयकमनुभवन्नितस्ततश्चरन्नासामास । तदानीमभ्याशे परस्परमविप्रयोगि चारुतररुतयोः कयोश्चन क्रौञ्चयोर्मिथुनं चाक्षुषयामास महर्षिर्हर्यक्षः । तमप्यनादृत्य पश्यन्तं कोऽपि पापनिश्चयो व्याधस्तत्क्षणं विव्याध तीक्ष्णेन शरेण मिथुनादेकं मन्मथार्तं पुमांसं मांसलम् । क्षित्यां क्षतजोक्षिताङ्गमावेष्टमानञ्च व्यथया महत्या तमुद्वीक्ष्य सहचरता वियोजिता पत्या क्रौञ्ची कामञ्चुक्रोश । तदैव धर्मात्मनस्तस्य महर्षे रङ्कूरितमन्तःकरणे किमपि कारुण्यम् । सर्वान्तर्यामिनो नारायणस्य भगवतः सङ्कल्पादवितथा-दृषेरुदभून्मनसि कश्चन विनिश्चयः । तिरश्चां हिंसाया व्याधजात्या निजधर्मत्वेऽपि, नायं खलु वेद्धुमवसरः ; विशेषतश्च नेदीयस्त्वस्मादृशेषु ; कामरसास्वादजनितं हि सौहित्यं भवति सर्वप्राणभृत्साधारणम् ; तद्विहन्तुं कस्यापि नास्त्यधीकारः ; अतः परममधर्मं कृतवानयं पापः प्रतिक्रियामर्हति नियतमिति । तत्क्षणमीक्षमाणः क्रन्दादमन्दा दृदृषदमपि द्राग्द्रावयन्तीमिव क्रौञ्चीमब्रवीदृषिः—

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ इति ।

तदनु शकुनिशोकपीडितेनापि मुनिना सता मया शान्तात्मनैव ननु भवितव्यं, कस्तं शप्तुमर्हं, बत ! तपो नाशकरं क्रूरं कथमीदृशं व्याहृतमिति तत्कालमालोचयन्ननहंभावस्वभावो महाप्राज्ञो मुनिः, ब्रह्मस्वभावेऽस्मिन्प्रपञ्चेऽचिन्त्यानन्तापरिमितविचित्रशक्तेर्भगवतश्चिदेकरसस्य परमेश्वरस्यैव सकलमेतल्लीलालास्यविलसितं किमि-त्यहं शोचामीति स्वयमेव मनःसमाधिं प्राप । न खलु कोऽपि भवति महात्मनां शोकस्योपशमकः । अतः स्वय-मेवम्मना विनेयमवादीत् । पादबद्धः समाक्षरस्तन्त्रीलयसमनुगतश्च मत्तः स्वतः प्रवृत्तः शोकार्ताद्भवत्वयं श्लोक एव नान्यथेति । छात्रोऽप्यनुपममनुत्तमञ्च मुनेर्गृहीत्वा वाक्यञ्चकार वाचो विधेयं प्राथम्येन, भाविसर्वाभ्युदय-भाजनतां भजमानो भरद्वाजः । गुरुरप्यत्यन्ताय[1] सन्तुतोष ।

अथ धर्मविन्मुनिः पूर्णकलशकरेण पृष्ठतोऽनुगम्यमानः शिष्येण प्रविश्य पर्णशालामुपविशन्किं मयाकृत-मित्यन्तरनुतपन्कथाश्चेतराश्चकार । अजय्यं हि मनो भवति महात्मनामपि, यतः समाहितपूर्वमपि पुनरुन्मेषमेति ।

---

1. अत्यन्तायेति विभक्तिप्रतिरूपकमव्ययम्

तदानीं स्वस्थाने स्थित एव श्रीरामस्वामिचरितप्रवर्तनसमर्थोऽपि चतुर्मुखः समाकर्ण्य स्वपुत्रनारदोदीरितप्रभावं, स्वमात्रसर्वस्वायमानायाः श्रीमत्याः सरस्वत्यास्तन्मुखादाविर्भावनेन मुनिपुङ्गवमात्मापरावतार इति सत्यापयितुं, नवरसप्रवाहैरूर्मिलमपि विशेषेण करुणरसैकपरिपोषणप्रवणं रामायणं कर्तुं करुणामूर्तिरयमेव मुनिरधिकारीति स्वाशयं विशदयितुमेव हि भगवानादिनारायणः प्रादुरवीभवत्क्रौञ्चवृत्तान्तमतः परमर्षिरवश्यद्रष्टव्य इति गौरवबुद्ध्युपबृंहितेन हर्षप्रकर्षेण स्वयमेव समभ्याजगाम । वाल्मीकिरुत्थाय वाग्यतः कृताञ्जलिरतर्कितं शकुन्तमिथुनदुर्दशादर्शनं तत्र च करुणरसोदयः सर्वं तदेतद्दैवतन्त्रमिति तस्थौ परमविस्मितः । प्रणिपतन्नष्टाङ्गपातमनामयादिकञ्च पृच्छन्नर्घ्यपाद्याचमनीयाद्यैरानर्च वैध्या पद्यया भगवन्तं लोकपितामहम् । विरिञ्चोऽपि समुपवेशेन परमार्चितमासनमलङ्कृत्य वाल्मीकये सन्दिदेशासनम् । स्मारं स्मारं क्रौञ्च्या दुरवस्थानमधर्म्यञ्च व्याधकृत्यमुद्विग्नः शोकेन निजवदनादनिच्छयैव प्रादुर्भूतं श्लोकमन्तर्गतमना एव मुनिर्गायन्नास्त ।

प्रहसन्नेव हंसवाहनो मुनिं प्रति, अलमनया समालोचनया श्लोक एव निबद्धो भवता । मच्छन्दादेवच्छन्दोमयी प्रवृत्ता त्वयि प्रथमतया सरस्वती । सकलकल्याणगुणैकनिलयस्य कौसल्येयस्य कलयानाविलं सकललोकैः श्लाघनीयं कृत्स्नं पवित्रं चरित्रम् । अक्षुद्रलक्ष्मीवितरणप्रवणे सरोजसगुणे सरसिजाक्षचरणे सभक्ति समर्पणादृते किमपि न फलममृतभारत्याः संस्कारसुभगायाः । यद्वृत्तं भगवतो दाशरथेस्सह वैदेह्या नारदमुखाच्छ्रुतं रहस्यं प्रकाशं वा, सर्वं तदविदितं ते न भविष्यति । काव्येऽस्मिन्भव्ये न कदापि वेद इव वागनृता भविष्यति । अतः पुण्यां पुण्यश्लोकादपि कथामतिमात्रमधुरां मनोहराञ्च कुरुष्व श्लोकैर्निबद्धाम् । स्थास्यन्ति यावत्कुलाचलाः स्रोतस्विन्यश्च महीतले तावत्तव रामकथा प्रचरिष्यति निष्प्रत्यूहम् । प्रलयेऽप्यविनाशि व्योमेव व्यापकं, निघर्षच्छेदतापोपमर्दादिभिः कथञ्चिदप्यनुच्छिद्यमानस्वरूपमिव जातरूपं, मलयजमिव च परिमळभरपरिपोषकञ्च भविष्यति । श्रुतिं मातरमाधारीकृत्य स्मृतय इव महर्षीणां, सर्वजगन्मङ्गळकारिणीं रामायणकथामुपजीव्य सर्वदेशेषु सर्वभाषासु च प्रादुःष्युर्महाकवीनां दृश्यानि श्रव्याणि च काव्यान्यमृताभ्यधिकान्यमूल्यान्यनल्पानि । आरभ्यैतत्क्षणं भवानप्यादिकविरिति सकलैर्गीयमानो लोकैः प्रतिष्ठितः सम्यगेधिषीष्ट । तावदूर्ध्वमधश्च निवत्स्यसि मल्लोकेष्विति सर्वमभिव्यञ्जयन्स्ववचोभङ्ग्या प्रत्येकप्रत्यग्दृक्संप्रदानेन वितन्वानः परममनुग्रहं त्रिकालज्ञोऽन्तर्दधे ॥

तदनु सम्यगुपस्पृश्योदकमृषिरुद्दिश्य निजगुरुं कृताञ्जलिरासीनः प्राचीनाग्रेषु दर्भेषु माङ्गळिको ब्रह्मप्रसादरूपेण श्रेयःसाधनेन धर्मेण वृत्तान्तं रामादीनामन्वैक्षत योगचक्षुषा ।

तेषामिङ्गितनिमिषितचेष्टितहसितभाषितादीनि करतलामलकवदपरोक्षयाञ्चकार । तदनन्तरं रघुवीरवरगुणगणसमनुभवसञ्जनितहर्षप्रकर्षविष्कारकं प्राप्तः पुलकं महर्षितिलकः स दीप्त्याभूतपूर्वया समिद्धः, निरवधिकसौभाग्येन परत्वसौलभ्याभ्याञ्च भोग्यतां प्राप्तस्य लोकाभिरामस्य रामस्य चरितलक्षणं प्रणिनाय रामायणम् ; यत्कामार्थगुणसंयुक्तं धर्मार्थगुणविस्तरं रत्नाकरमिवापरं श्रवणमनोहरं सुप्रसन्नमपि गभीरभावं,मेदुरमुदारया रीत्या, समिद्धैर्बन्धुरं बन्धैः, प्रशस्तानल्पकल्पनं, सुवृत्तैश्चादन्तुरं, विकस्वरञ्च रसोर्मिभिरभिनवमधुमयभणितिरमणीयं गुणालङ्कारसमृद्धं, कुसुमसुकुमारपदविन्यासपरिपेशलं, नारदोपदिष्टदिव्यसूक्तिलक्षणसूत्राणामसाधारणं पद्यात्मना परिणतप्रायमिव किमपि भूष्यं भाष्यमितिहासान्तरविलक्षणमतादृक्षलक्षणं समस्तजगन्मोहने रामसलक्षणञ्च ॥



दृशयन्

## ॥ श्रीमद्रामायणवर्णनं प्रचारणञ्च ॥

स्फुरत्तरा हि श्रुतिस्मृतिविहितधर्मा वर्मायमाणाः सनातनतया भगवदन्यूनमहिमानोऽपि भवन्ति प्रथमप्रकाशाय सदाचारानपेक्षमाणाः। "आचारप्रभवो धर्मः", इति हि स्मरणम्। एकैकेष्वप्यैतिहासिकेषु पुरुषेषु कतिपय एव सदाचारा उपलभ्यन्ते न तु समुदिताः समे। अतः सदाचारलक्षणानां धर्माणां सौशील्यादीनाञ्च गुणानामेकमेव परममाश्रयं पुरुषधौरेयं जिज्ञासमानः, ब्राह्ममुखाच्छ्रावितश्च परमेश्वरकृपया, तृप्तिमपर्याप्तामवाप्तः तञ्च समस्तजगद्रक्षणकृते कृतावतारं रघुकुले श्रीमन्नारायणस्यैव परमसारायमाणमधिकृत्य श्रीरामचन्द्रं सान्द्रानन्दघनं घनश्यामं, निरमात्परमलोकोपकाराय लोकपितामहप्रेरणया चरित्रमतिमात्रं पवित्रं विचित्रञ्च मुनिरात्मवतामनुत्तमः। अतः स्फुरति प्रशस्ततममिदमितरमहर्षिप्रणीतान्यपेक्ष्य धर्मशास्त्राणि। प्रकर्षवानृषिर्भगवान्वाल्मीकिः ऋष्यन्तरेभ्यश्च रघुरामोऽप्यवतारेतरापेक्षया धार्मिकादर्शतां प्रकाशयन्भारते।

यस्मिंश्च समुज्ज्वलन्ति श्लोकानां चतुर्विंशत्सहस्राणि श्रीगायत्रीमहामन्त्राक्षरोपक्रमप्रतिसहस्राणां तथा पञ्चसर्गशतानि षट्च काण्डानि। यच्चोत्तरकाण्डेन परिमण्डितं पण्डितेन भगवतः कोदण्डपाणेस्त्रिमूर्त्यपेक्षयापि समभ्यधिकयोः परत्वसौलभ्ययोरभिव्यञ्जने, हयमेधोत्तरभाविवृत्तान्तश्रीरघुपरिवृढराज्याभिषेकानुपदकथासन्दर्भाभ्याम्। रसैर्नवभिः शृङ्गाराद्यैः स्वाद्यं नैकरागानुगमनकमनीयं तन्त्रीलयसमन्वितं विविधध्वनिप्रस्थानैः सहृदयहृदयसमाह्लादकमेकमास्पदं गुणालङ्काराणां परस्परमुपश्लिष्यद्भिरिव स्नेहवशेन प्रफुल्लसुमलोभनीयैरतिमृदुलैः साधुपदैः सुन्दरतरशरीरं भारते प्रत्यग्रतया किमपि समुदीर्णमिव स्फुरणं शब्दाह्वयज्योतिषोऽवाङ्मनसविषयस्य सम्पूर्णं पुण्यमिव भारतीयानां भारत्या अभूतमभविष्यच्चैकं विवर्तरूपं रघुवर्यस्यावार्यवीर्यस्य परमाश्चार्यचर्याणां किमपि मणिदर्पणं सकलकाव्यकलासौभाग्यलक्ष्म्या लीलालास्यस्थलमिव समुज्ज्वलमपूर्वब्रह्मणो महामुनेरुद्भूतं व्यद्योतत वदनारविन्दाद्रामायणं परममेकं परायणं भगवदेकशरणानां शरणञ्च महादर्शतया कवयितॄणां कल्पद्रुमायमाणम्।

सत्यप्येवमासीच्चिन्ता बृहती महामुनेः कोऽन्विदं विधाय वाचो विधेयं प्रयुञ्जीतेति। अनुपदमेव समत्त्यतिशयमुपसृत्य महामुनेश्चिन्तादैर्घ्यमसहमानेनेव प्रेरितौ परमेश्वरेण सर्वलक्षणलक्षिततया श्रीरामचन्द्रसप्रच्यञ्चौ गान्धर्वतत्त्वज्ञौ परिनिष्ठितौ च समेष्वपि समाम्नायेषु मूर्छनाग्रामवेदिनौ परस्परमात्रसदृशौ राजकुमारौ कुमाराविवापरौ धृतमुनिवेषौ पीडयामासतुश्चरणौ भद्रङ्करणैकप्रवीणौ।

कृत्वा यथोक्तमुभावपि तौ भ्रातरौ कुशलवनामानौ कुशीलवौ लब्धमुन्यनुग्रहौ श्रवणमधुरमारभेतां गातुं भावितात्मनामृषीणां सन्निधौ तथा साधूनाञ्च द्विजन्मनाम्।

तेच समाकर्ण्य कर्णरसायनं सुधामधुरिमाधःकरणे धुरीणं वीणाक्वणितमपि ह्रीणं कुर्वाणं श्रीरामायणगीतमविगीतमानन्दमहोदधौ निमग्नाः सप्रपञ्चं विस्मृत्यात्मानमपि परवशाः परममाश्चर्यं किमपीत्युत्पश्यन्तः प्रशशंसुरुत्तराममत्सरप्रकृतयः सशिरःस्पन्दमहो! माधुरी महाकाव्यस्य गीतामृतलहर्याश्च; वृत्तचरमपि प्रत्यक्षमिव भवति; सर्वेभ्योऽभ्यर्हितःखलु धीरोदात्तः श्रीपुरुषोत्तमः प्रधानपात्रतां प्रकाशते प्रापितः; दृश्यकाव्यमिव हि प्रीणयति नः;

हन्त ! विस्मापयत एव प्राचेतसः काव्यकलाकलनाकौशलेन लोकमखिलम् । न तारतम्यमरम्यमाकलयामो महिमनि मानोज्ञके च श्रीरामवाल्मीकिरामायणानामिति ॥

अतिमधुरमपि हि काव्यमविमृष्टं गुणग्राहिभिर्नावकल्पेत भव्याय यौवनमिव श्यामायास्तरुणानुपभुक्तं श्रीमत्त्वमिव विद्वदनुपयुक्तं, साहितीज्ञानमिव च शास्त्रवित्तिवृतिविरहितम् ।

अतोऽद्य पुनरुदीर्णमिव व्यजयततरां प्रत्यग्रमिव किमपि भारताभरणं रामायणात्मना । इत्थं वल्मीकमुनिमनःक्षेत्रे ब्रह्मपुत्रेणोप्तं व्याधवृत्तान्तव्याजेन मुनिमुखादङ्कुरितं, द्रुहिणानुग्रहेण पल्लवितं, ब्रह्मवादिनां सदसि पुष्पितं, भगवदर्पणेन च फलितं भव्यमेतद्रामचरितं चन्द्रतारकवदव्युच्छिन्नं गुरुपारम्पर्येण समागतं श्रुतिशिखरमिव सदुपसदनविधिपुरस्सरमधिगन्तव्यं सतामनुरुध्य सम्प्रदायमिति न तार्किकबुद्धिमात्रगोचरतामेतीति नेदं विवादास्पदं बहुविदाम् ।

तदानीं प्रमोदमानमानसाः स्वस्वशक्त्यनुरोधेन ताभ्यामत्यर्थिभ्यां कुशलवाभ्यां विश्राणयामासुः पारितोषिकतया दर्भासनकमण्डलुमौञ्जीकौपीनोपवीतादीनि । यत्किञ्चिदपि प्राज्ञैःखलु वितीर्यमाणं प्रशंसापुरस्सरं जनयति बहुमानं नान्येन हिमवत्प्रमाणमपि सुवर्णम् । अत्राप्यशक्ताः प्रयुञ्जते स्माशिषमाविर्भूतज्योतिषो ब्राह्मणा अविप्लुतार्थाम् ।

अश्वमेधमहामणिमण्टपमध्यासीनो भ्रातृभिः सचिवैश्च भगवान्राघवोऽपि राजवीथ्यां ब्रह्मवित्कल्पमुच्चैर्गायन्तावेव गच्छन्तौ समुदीक्ष्य स्वपार्श्वमानाय्य समभ्यर्चन्यथाविधि तौ सञ्ज्ञापयामास ।

पार्थिवलक्षणाविमौ मुनी गास्यतः श्रुतिमधुरमतः शृणुत सावधानं, ममाप्येतद्भूतिकरं ब्रवीमि, निबोधत महानुभावं चरितमिति परिषद्गतान् हर्षादभाषत । प्रचोदितौ च रामचन्द्रेण गातुमुपाक्रमेतां सदसि महति महतां श्रीरामायणं कुशलवावित्थम् ॥

## ॥ श्रीसाकेतसौभाग्यवर्णनम् ॥

अस्ति समस्तवस्तुसमुद्भासितमस्तोकविभवममरपुरमप्यवधीरयदिव निरुपमसम्पत्स्तोमैः, शतमखमुखानपि काममसूययद्भिरिव बर्हिर्मुखान्स्वस्तिमदस्तिमद्भिरुपशोभितम्, रथगजतुरगसमारोहधुरन्धरैरजस्रमनम्रकन्धरैः प्रतिवरूथिनीनाथखर्वेतरगर्वभरनिर्वापणपरायणपराक्रमणैकधाममिरसमचारिमरुक्मवर्मप्रत्यग्रप्रत्युप्तरत्नप्रभाकन्दलकवलितसङ्ग्रामाङ्गणदुर्दिनबहलान्धकारैः समरशब्दश्रवणमात्रसमुद्भूतकौतूहलैर्विपक्षकुलहालाहलैरादधद्भिः समस्तसामन्तभूमिकान्तसीमन्तिनीवदनारविन्देषु मिहिकामयूखप्रक्रियां जीवितमप्यविगणय्य भर्तृकृत्यप्रसाधकैर्दिव्यास्त्रशस्त्रग्रामकोविदैः प्रतापैरिव मूर्तैरोजोभिरिव पुञ्जीभूतैः प्रकम्पनवदप्रकम्प्यैरचलवदचलैर्वीरभटपटलैरभिरक्षितं, विशालतररसालकिसलयसमास्वादानन्दतुन्दिलपरभृतमिथुनप्रोद्गीयमानपञ्चमस्वरश्रवणमात्रेण शृङ्गारिणामन्तःकरणेषु समुद्दीपयन्तीभिः कामपि व्यथां मान्मथीं, मन्दमन्दमरविन्देषु सुन्दरस्पन्दनेन विगलितैः परागैः सुगन्धीनि दधद्वारीणि

सहस्रं विहारदीर्घिकानामावहन्तीभिः, ऋतुनियतिमन्तरापि पुष्पिताभिर्लताभिः फलितैश्च पादपैः सुखसन्दर्शनाभिः, वासरावसानवेलायामुपचीयमानसुषमाविशेषाभिः, चन्द्रिकाधवलैर्लवलीमण्टपैः नददलिपुञ्जमञ्जुलसङ्गीतभङ्गीमुखरितहरिदन्तरालैरणन्मणिमेखलाभिर्महिलाभिररं रिरंसूनां यूनां निकुरुम्बैश्च सचेतसां चेतांस्याकर्षन्तीभिः, सहजरामणीयकचैत्ररथलक्ष्मीदूरीकरणपटीयसीभिरुद्यानवाटीभिरुद्भ्राजितं, संक्रन्दननन्दनवनविहरणपरायणगीर्वाणवारवरवर्णिनीनां जयिनीभिः प्रतिक्षणविजृम्भमाणवक्षोजशिखरिविदारिताभिनवचीनपट्टकञ्चुकोदञ्चिताभिः कृतसुकृतैकसम्भुज्यमाननवयौवनोन्मेषसंहर्षिणीभिः शम्बरवैरितन्त्ररहस्यमुपदिदिक्षतेवाक्षिकोणेन कामिनाममन्दानन्दसन्दायिनीभिर्वीणावेणुमृदङ्गादिदिव्यवाद्यसंवादिनीभिः सरसकाव्यालापविनोदिनीभिर्वासनावदासवताम्बूलरसास्वादिनीभिः श्रुतिमधुररागग्रामालापिनीभिः दृढतरपरीरम्भारम्भसंमोदिनीभिः स्तोकेतरामोघबिब्बोकानुविधायिनीभिर्हसन्तीभिः नृत्यन्तीभिर्गायन्तीभिर्दीव्यन्तीभिरुपहसन्तीभिर्विलज्जन्तीभिर्विलासवतीभिरानन्दवैचित्र्यमुत्पादयद्भिरिन्द्रनीलशिखरिशिखरानुकारिभिर्हरिहयरत्नमयसौधसहस्रैरलङ्कृतमभ्रङ्कषैः, तरुणतरणिकिरणसम्पर्केण समुद्वमद्भिः स्फुलिङ्गाञ्छिखिना परीतमिव स्वं सन्दर्शयद्भिर्हरिदश्वकान्तरत्नप्राकारैः, कुमुद्वतीरमणकिरणप्रथमप्रसरणाधिकरणैर्निरर्गलनिर्गलदर्णःप्रसरणैः प्रालेयाचलकूटप्रतिभटैश्चन्द्रकान्तोपलमयैर्गोपुरै रञ्जनावनिधरसोदरद्विरदवृन्दारकगण्डस्थलविनिर्गलद्दानसलिलसरिद्वल्लभेषु निपत्य सान्द्रीभवद्भिः खरतरतुरगखुरसमुत्थितैः सुवर्णरजोनिकरैः पङ्किलतामापाद्यमानाभिर्हैमीभिर्नैकराजरथ्याभिः, विमलस्फटिकसालभञ्जिकापुञ्जपरिरञ्जितवैद्रुमसोपानपरम्परामनोहरैः सरोवरैः, दुर्वर्णविहारभूमिधरैः, नवरत्नसुन्दरैर्देवतामन्दिरैः, वाजिगजमहोष्ट्रशालाभिर्विशालाभिर्विद्याशालाभिर्विपुलाभिः पण्यवीथिकाभिर्नटविटचेटगायकपीठमर्दविदूषकसङ्कलाभिर्नाट्यशालाभिरतिगम्भीरैरायुधागारैर्गरिष्ठगोष्ठीबन्धागारैर्यन्त्रागारैः प्रबन्धागारैश्च सर्वा अपि राजधानीरतिवर्तमानम्, श्रीरङ्गशायिनेव [1]कमलाशयोल्लसितपादमूलेन, धूर्जटिनेव [2]परिगृहीतचन्दिरेण, नर्तकेनेव [3]निजबहुलास्यदरीदृश्यमानजीवलोकेन, समासविशेषेणेव [4]विभाषावरुद्धेन, पाणिनिसूत्रेणेव निपतितबहुलशब्देन, प्राकृतव्याकरणेनेव व्यक्तधातुवर्णव्यत्यासेन, वैशेषिकदर्शनेनेव [5]सद्द्रव्यविशेषसमवायेन, कापिलतन्त्रेणेव प्रकृतिरमणीयेन, त्रिविष्टपेनेव [6]हरिहयसमाक्रान्तेन, जीमूतवाहनेनेव [7]नागानन्दाय परिकल्पितनिजकळेबरसमर्पणेन, आखण्डलेनेव [8]समादृतचित्रशिखण्डिजमधुरवचनेन, दुष्यन्तेनेव [9]समनूदितनिजासक्तशकुन्तलालप्यमानवचनेन, [10]यूपस्तम्भेनेवाजगरसम्बद्धेन महीध्राणां सहस्रेण परिवृताभिः, पटीरतरुकोटरोदरक्रूरफणाधरजिघृक्षया व्योमन्युड्डयमानानां वैनतेयानां कलरवेण मुखरीकृताशावकाशाभिः, क्षितिधरभीकरगह्वरोदरमन्दिराणां कण्ठीरवाणां भयङ्करैर्गर्जितैरिव तर्जयन्तीभिः, बलावलेपिभिर्द्वीपिभिर्मदोत्कटैः करटिभिरुदग्रक्षुद्भिस्तरक्षुभिरप्रतिममल्लैर्भल्लूकैर्नमितनमेरुवानीरैर्वानरैः क्षुभ्यमाणकासारैः कासरैरतिगभीरसन्नदैर्बलीवर्दैः करालदंष्ट्रैर्दंष्ट्रिभिर्दुःसहविषैराशीविषै राष्ट्रोचितैर्महोष्ट्रैः

(1) कमलाशयः लक्ष्मीहस्तः, तामरसतटाकश्च। (2) चन्दिरः = चन्द्रः, हस्तीच। (3) लास्येन निमित्तेन दरीदृश्यमानः, बहुलास्यानि बहुळद्वाराणि तान्येव दर्यः गुहास्तत्रदृश्यमानः। (4) विभाषा = विकल्पः, वीनां पक्षिणां भाषा रवः। (5) सद्द्रव्य = विद्यमानद्रव्य, समीचीनद्रव्य। (6) हरिहय = इन्द्रः, सिंहतुरग। (7) नागानन्दाय = तन्नाम्ने, गजानामानन्दाय च। (8) चित्रशिखण्डिजः = बृहस्पतिः, चित्रवर्णमयूरजश्च। (9) समनूदित = सम्यगनूदित, अनुपदमुदितप्रति श्रुद्विषय, शकुन्तैर्लालप्यमान = पक्षिभिर्भृशलप्यमान, शकुन्तलयालप्यमान (10) अजगर = गिरिव्याल, रलयोरभेदादजगल।

कलितमनोहरणैः हरिणैः खरतरखुरैः खरैर्हृदयङ्गमैस्तुरङ्गमैर्ग्रहीतुमसुलभैः कलभैरितस्ततःसंपतद्भिः पतत्रिभिः सुभृतैः परभृतैरुत्कण्ठितैर्नीलकण्ठैः क्रीडद्भिः*श्चिक्रोडैःसदारैर्भूदारैः समाकीर्णाभिः, विमलहरिन्मणिश्यामलकोमलमृदुलशाद्वलशबलकूलतालतमालतक्कोलाङ्कोलतिलकामलकवञ्जुलवकुलकुरवकमरुवकफूर्जरवर्जूरनागपुन्नागवेतसपनस - निम्बकदम्बसालरसालसप्तच्छददेवदारुमन्दारपारिजातादिवनस्पतिराजराजिविराजिनीः, कूलकुलायद्रुमपरिसरपरिलसत्कुसुमपरिमलमिलदलिकुलकोलाहलमुखरायमाणमञ्जुलवल्लीनिकुञ्जेषु स्वैरमभ्यस्यद्भिर्हरिणार्भकैरोमन्थं सह भर्तृभिः नृत्यन्तीभिर्मयूरीभिः, विकचकुटज ⊕ मणीचकसुरभिलैस्तपस्विनासुटजैर्मलयानिलोद्धूतशतपत्रविगलितपरागजालसुगन्धिभिरच्छस्फटिकसच्छायैः शिशिरसरससलिलकल्लोलैर्मन्दं मन्दं चरद्भिर्मरुद्भिर्वाचामगोचरं हर्षभरं सहृदायानामुद्भावयन्तीर्बह्वीः स्रोतस्विनीर्बिभ्राणाभिररण्यानीभिराक्रान्तं, परीतं परिघाजलैः क्रूरतरनक्रचक्रतिमितिमिङ्गिलराजिलसङ्कुलैः परिवृतमत्युच्छ्रायं गमितैः प्राकारैः, मरुगिरिवनदुर्गवर्गैर्मनसाप्यनभिभवनीयं महनीयं वननीयञ्च ⋇सारवसारवतुङ्गतरतरङ्गसङ्गपवित्रीकृतमखिलभुवनमण्डलैकमण्डनायितमशेषसौभाग्यलक्ष्मीमङ्गलनर्तनैकरङ्गस्थलं, बाह्यसाधनसामग्रीनैरपेक्ष्येण ब्रह्मणः सङ्कल्पमात्रेणेव विनिर्मितमुत्तरकोसलेषु प्रथितमक्षुद्रभद्रैकनिधानमयोध्येतियथार्थाभिधानं नगरम् ॥ यदुपनगरसाहित्येन विनैव, स्वयमायतं द्वादश योजनानि, विस्तीर्णञ्च त्रीणि योजनानि स्वसङ्कल्पवशान्मानवानामीश्वरेण मनुना विनिर्मितं सदुच्चैश्चकास्ति, मह्यमानञ्च महामहिमसम्पन्नेन त्रिभुवनपवित्रीकरणप्रवणगीर्वाणनिर्झरिणीसमवतारणकारणभूतायाः षष्ट्याः पुत्रसहस्राणां गुरुणा सगरेण पूर्वं समस्फुरत्प्रशिष्टम् ॥

## ॥ साकेतराजवर्णनम् ॥

तत्र पुरंदर इव वृन्दारकाणाम्, वासुकिरिव फणाधराणाम्, हर्यक्ष इव मृगाणाम्, तार्क्ष्य इव पक्षिणाम्, मन्दार इव द्रुमाणाम्, मेरुरिव महीध्राणाम्, ऐरावत इव सिन्धुराणाम्, उच्चैश्रःवा इव तुरङ्गमाणाम्, चिन्तामणिरिव रत्नानाम्, वसन्त इवर्तूनाम्, राजसूय इव यज्ञानाम्, प्रणव इव च्छन्दसाम्, वैकुण्ठ इव लोकानाम्, वाल्मीकिरिव कवीनाम्, परिणूतगुणगणानाम्, नृपाणामग्रगण्यः, कर्ता शतहयमेधानाम्, हर्ता शत्रुसंपदाम्, हन्ता प्रत्यनीकानाम्, मन्ता शास्त्रार्थानाम्, जेता विवदमानानाम्, भोक्ता वैषयिकानन्दानाम्, विवेक्ता सारासाराणाम्, अवाप्ता समस्तकामानाम्, प्रबन्धा प्रबन्धानाम्, होताऽग्नीनाम्, यष्टा देवानाम्, **शासिता दुर्विनीतानाम्**, रक्षिता जीवलोकानाम्, वेद इव [1]समर्थवादो [2]ब्राह्मणभक्तिमांश्च, [3]निष्ठितशब्द इव [4]प्रकृतिसन्निहितप्रत्ययः, तद्धित इव [5]समर्थप्रकृतिकः, **(सुपर्ण इव खण्डितानेकभुजङ्गः, वामन इव विक्रमाक्रान्तभुवनो नियमितवलिपराक्रमश्च, वारण इव दानार्द्रकरः,)** [6]प्रत्ययविशेष इव [7]परतामापन्नः, सुनीति-

---

* चिक्रोडः=அணில். ⊕ मणीचकःपुष्पम्। ⋇ सरय्वांभव। (1) समर्थः = सामर्थ्यवान्, सङ्गतार्थवादश्च (2) ब्राह्मणभक्तिमान् = ब्राह्मणभक्तियुक्तः, ब्राह्मणाख्यभागवांश्च। (3) निष्ठितशब्दः = प्रयोगार्हः शब्दः। (4) प्रकृतिः धातोः पूर्वोभागः प्रजा च। (5) समर्थप्रकृतिकः = सामर्थ्यवत्प्रकृतिकः, कृतसन्धिकार्यवत्प्रत्ययपूर्वभागवांश्च। (6) प्रत्ययविशेष इति बहुजकजादीनां व्यावृत्त्यै। (7) परताम् = अनन्तरदेशताम्।

न ईति

भाजोऽप्यनीतिभाजः प्रजाः रञ्जयन्, अत्रासोऽपि [1]सत्रास स्वप्रभावेण सदा विराजमानः, **मोहविहीनोऽपि [2]मोहाविहीनः**, अरोगोऽपि [3]सरोगो विलासिनीभिर्विजिहीर्षुः, [4]आर्यलक्षणोऽप्यनार्यलक्षणः, दूरीकृतक्षुद्रसंपर्कोऽपि [5]ऊरीकृतक्षुद्रसहितभोजनः, **शिष्टपरिग्रहोऽपि [6]विशिष्टपरिग्रहः**, [7]वितरणशूरोऽप्यवितरणशूरः, विदेशाभिमानोऽपि [8]सदेशाभिमानः प्रभातप्रबोधोऽपि [9]विप्रभातप्रबोधः [10]पिनाकिनामासादितानन्दोऽप्यपिनाकिनामासादितानन्दः, अमार्गमदहार्यपि [11]सन्मार्गमदहारी, **विस्मिताभाषणोऽपि सस्मिताभाषणः**, अविपर्यस्तगोत्राचारोऽपि [12]विपर्यस्तगोत्राचारः, वासवश्रीसंपन्नोऽपि [13]नवासवश्रीसंपन्नः रत्नवलयानन्दकृदपि [14]कुवलयानन्दकृत , महामान्यपि [15]विमानी, [16]एकपरमोऽप्यनेकपरमः, गर्वितान्तःपुरपरिग्रहोऽपि [17]अगर्वितान्तःपुरपरिग्रहः, **सकलत्रोऽपि [18]विकलत्रः**, सर्वातिशायिस्वशयकुशेशयशायिपरावसायिचन्द्रहासविलाससमसमयस्वीभवत्समस्तसामन्तभूमिकान्तलक्ष्मीविलासः, अविकलबाहाबलसकलमहीपालकुलमौलिकोटीरमाणिक्यमणिकिरणनीराजितचरणकमलः बाधिताबोधविबोधान्यथाबोधः, पारदृश्वा विद्यानां सकलकलाकुशलः **कल्याणगुणमणिगणार्णवः करुणाशेवधिः** वनीपकजनमनीषितवितरणचिन्तामणिः, विफले च वासवकुलिशकौशले विनिर्जित्य बृन्दारकारीन् पुरंदरपुरपुरंध्रिनिकरकरसरोरुहसादरसमर्प्यमाणमन्देतरमकरन्दसुगंधिमन्दारमालिकोपशोभितोन्नतग्रीवाभोगः रम्भादिमरम्भोरुवदनाम्भोरुहजेगीयमानविमलापदानः, संक्रन्दनोपकल्पितसिंहासनार्धमलंकुर्वाणः, बिभ्राणश्चतुःसागराम्बराया भुवो मण्डलमिव नाकमण्डलमपि, दशस्वपि दिक्ष्वप्रतिहतरथप्रचारः हरिदङ्गनाङ्गदुकूलायमानयशःप्रचारः मनागप्यनुल्लङ्घितराघवकुलाचारः, दिनमणिकुलमणिप्रदीपः, अनल्पदर्पकन्दर्पावलेपलोपिरूपधेयः परिणतभागधेयः दशरथनामधेयः क्षितिमण्डलाखण्डलः चक्रवर्तिशिखामणिः सुप्रजसः प्रजा रञ्जयन्नासांबभूवान् ॥

अभिवर्धयांबभूव स राष्ट्राङ्गषट्कमजस्रमात्मानमनुज्जिहानैर्धृतिदानज्ञानोत्साहैः विद्यावैनिय्यपौरुषैश्च प्रधान पार्थिवगुणैः । अध्ययनयजनदानेभ्यः साधारणेभ्यः, धनुर्वेदाद्यभ्यासनिग्रहानुग्रहेभ्यश्च विशेषधर्मेभ्यः स्वमप्रच्यावयन्प्रत्यरुन्ध प्रयत्नेन स्वस्मिञ्जनेषु च संभाव्यमानमधर्मसंबन्धम् । वैरिनिग्रहकरसंग्रहराज्याभिवर्धनादिसंपत्त्यभ्यागमप्रकारानुद्भावयन्, चौरादिभ्यश्च प्रयत्नेनार्जितं परिरक्षन्, दैवतब्राह्मणवनीपकेभ्यः कीर्तये च धर्मकामनया रथगजतुरगपदातिदुर्गजनेभ्यः परपक्षीयविश्लेषायात्मपक्षीयाविश्लेषाय चार्थकामनया, वापीकूपतटाकाराममण्टपविहारशैलादिभ्यः कामकामनया च विभजन्विन्ययुङ्क्त यथायथम् ॥

---

(1) सत्रा स इति भिन्ने पदे सत्रा = सकम् । (2) मोह्राविहीनः=मा-प्रमाणं ऊहस्तर्कः ताभ्यामरहितः । (3) सरो गच्छतीति सरोगः । (4) अनार्यलक्षणः = नारीणामलक्षणो न भवति । (5) उरीकृतक्षुत् = अङ्गीकृत क्षुत्सन् रसहितभोजनः । (6) विशिष्ट = श्रेष्ठ; परिग्रहः = कलत्रम् । (7) अविता-रक्षिता रणशूरा यस्य सः । (8) सदा ईशाभिमानः । (9) विप्रैः भातःप्रबोधः । (10) अपि नाकिनां, देवानामपि । (11) सन्मार्गमदः= समीचीना कस्तूरी । (12) विपर्यस्तानांगवांत्राणंत्राः स आचारो यस्यसः । (13) नवासव = नूत्नमधु । (14) कुवलय= भूवलय । (15) विमानी = विमानवान् । (16) अनेकपैर्गजैरमतइति । (17) अगरुणा = गन्धद्रव्यविशेषेण, इत = युक्त । (18) विकलांस्त्रायत इति ॥

2

नयलिप्सया धनीयया वाऽन्तिकमासेदुषां सुलभदर्शनः स्मितपूर्वमवोचत मधुरं वचनम्। अभ्यमन्यत विशेषतश्च चक्षुषी इव गणितव्याकरणे सर्वविद्योपकरणे। अर्थकामावन्वभूयेतां धर्माविरोधेन। बहुभ्यो बहुधा बहुश्रवणपरायणाय नैवारोचताभ्यवहारोऽपि। विषयगुणदोषज्ञतया निरुन्धानः स्वाभाविकीं मनःप्रवृत्तिं प्रावर्तयच्चेतः सत्स्वेव विषयेषु सूत इव समर्थो वाहम्। प्रतिक्षणविपर्यासलक्षणानां गुणानां च त्रयाणां सर्वप्राणिसाधारण्येन, पुमर्थं शत्रुमुखाद्विपरीतं सुहृन्मुखाच्छ्रावितोऽपि न्यक्कृत्य वक्तृगुणदोषौ विषयगतावेव तौ पर्यालोच्याहेयं स्व्यकार्षीद्धेयं निरस्यन्। बिभयांबभूव चावश्यभेतव्येभ्यो धृतिमानपि पापापवादादिभ्यः। नोदसहत परस्य दोषमवगन्तुमप्यात्मगतं तमनपनुद्य। यावदन्तःशत्रून्कामादीन्व्यरुन्ध तावन्न बाह्यान्। नातिसमधीयत कपटैः प्रत्यवस्थातॄणां यन्निगूह्यैवात्मकामनां समन्वबुभूषतसमग्रं काम्यम्। व्यद्योतत समुच्छ्रायपरिपन्थिनो विकत्थनस्य महान्परिपन्थी। अनणुद्रविणवितरणादिना बहु संमानितैः ज्ञानशीलवयोवृद्धैः, उत्पातैर्दैवीः परगुणेङ्गिताकारचेष्टाभिर्मानुषीश्च विपदः पूर्वमेव विबोध्यमानः शान्तिभिराद्याश्चतुर्भिरुपायैरन्त्याश्च पर्यहार्षीत्। पर्यह्रियत च तेन सुदूरतः नटविटधूर्तनास्तिकानां संसर्गः। निसर्गनैर्मल्यशालीन्यपि सलिलानि सकृत्क्षितिसंसर्गमात्रेणैव हि स्वभावात्प्रच्याव्यन्ते। व्यापप्रे न कदाचिदपि सहसा गुरुषु कार्यारम्भेषु ऊहापोहकुशलोऽप्यनभिमन्त्र्य गरिष्ठैः गोष्ठीषु। तदवश्यकर्तव्याकरणमकर्तव्यकरणं मध्ये व्यामुह्य विरमणं समारब्धे कर्मण्यभिमन्तव्णं स्तोकफलार्थमतिमहदारम्भणमेवमादयो दोषाः प्रहास्यतापादकाः नैवाजनिषत। आत्मनः कर्मणः वैरिणः सहकारिणां च संप्रधार्यैव बलाबलं समभिषेणयांबभूवुषा सहस्रकृत्वः समन्वभावि विजयलक्ष्मीस्वयंग्रहाश्लेषः समराङ्गणे। स्वसुखमनभिलष्य निजभुजबलासादितेन संग्रामफलेन समग्रेणाप्यन्ततः प्रजाभिप्रायेणैव (गामिना) बभूवे। [1]धनायापीडितेषु दानम्, [2]शीतकेषु परैर्नियुध्य श्रान्तेषु च साम, बलवत्सहायसंपन्नेषु स्वपक्षेण कथमप्यसंयोज्यमानेषु भेदम्, एभिरजय्येषु च दण्डं प्रायुङ्क्त। आयापेक्षया नाधिकमवकाशं ददौ व्ययस्य। अत्याये हि व्यये राज्ञां संपन्मूलाया राज्यस्थितेः क्रमशो नाशे वचसामविषया विपत्तयः प्रादुःष्युः। अभिषिषेणयिषंश्च देशकालौ विशेषतः प्रतीक्षांचक्रे। तयोर्विरोधे हि पराक्रमोऽप्यमेयो नियतमश्नुवीत वैफल्यम्। जीयन्ते हि बलिनोऽप्युलूका मतङ्गजाश्च दुर्बलैः काकैर्नक्रैश्चाहनि सलिले च। परीक्ष्यैव प्रमाणैः, कामादिभिः षड्भिः आलस्यविस्मरणप्रमादैश्च दोषैरस्पृष्टान्ह्रीणांश्च निषिद्धाचरणेषु बहुश्रुतान्वर्षीयसो बान्धवानेव मन्त्रिणोऽवृणीत; न त्वतादृशान्पुरस्कृत्य केवलं मैत्रीम्। अकुलस्पर्शिनोह्यपजिहीर्षन्तः राज्यतन्त्रेषु भृशमुदासीनाः लोकापवादादभीरवः क्रमेण निर्मथ्नीयुरपि राष्ट्रम्। विश्वसिति स काममात्मना समधिकृतान्। अशोधितस्याधिकारादपि जनयेदनर्थबहुलं समधिकृतेष्वविश्वासः प्रभूणाम्। न्ययुज्यन्त च स्वस्वोचितेषु कर्मस्वधिकार्याः विमर्शनपुरःसरं अनेनायमिदं कुर्यादिति। निर्व्याजप्रेमसंपन्नानजस्रमनुरञ्जयांबभूव त्यागेन मधुरवचनेन च बान्धवजनान्। यदैश्वर्यमसंभुज्यमानं बन्धुभिरुद्भिन्नकूलकासारनीरवत्प्रणश्यति। अकारणेन पूर्वं विश्लिष्य पुनः संश्लिश्लिक्षन्तमपरीक्ष्य न स्व्यकरोद्बान्धवमपि। जातुचिन्न प्रसस्मार (प्रसरतिर्विस्मरणार्थः) कृत्यमैश्वर्यमदेन वैषयिकानन्दभूम्ना वा। सर्वं

---

1. धनाया = धनविषयोगर्धः 2. शीतकेषु = अलसेषु शीतोष्णाभ्यां कारिणि

साधारणी हि विस्मृतिर्विहन्ति कीर्तिं याच्ञेव प्रज्ञाम् । विस्मरणशीलस्य राज्ञः संपदा किं प्रयोजनं वनगिरिदुर्गैरिव भीरोः । तुलादण्डवत्प्रतिपन्नः साम्यावस्थाम्, विचार्य न्यायं यथापराधमदण्डयद्दण्ड्यान् । अवध्यस्य वधे हि सह नृपेण राष्ट्रमुच्छिद्येत । वध्यस्यावधे तु मल्लिकामिवृद्धिः स्नुहिनेव प्रजाक्षेमस्तेन प्रतिरुध्येत । नृशंसादपि सहस्रगुणं निकृष्यते धनायया नयमुज्झिहानो नरपतिः । नयव्यतिक्रमे राज्ञां गावो न दुहीरन्, जह्युर्द्विजातयः कर्मषट्कम्, हूयेरन्न हवींष्युषर्बुधे । अतर्पिताश्च देवा न वर्षेयुः, अनावृष्ट्या चौरादिना च राष्ट्रस्य महान्प्रादुःष्यादवसायः । समूलघातं निघ्नन्ति व्यथितसज्जनाश्रुशस्त्राणि दुर्नृपतिम् । मित्राणां वचनं न न्यषेधीत् । वेदानां स्वरसंपत्तिरिव राज्ञां दाक्षिण्यसंपत्तिरावश्यकी । कालविपर्ययेण स्वविषये सुहृद्भिराचरितमाज्ञानिक्रमपराधमक्षमत । मित्रैर्दीयमानमुपभुज्यापि विषं पुनस्तत्प्रीतिमेव संपिपादयिषन्तो महान्तो ह्यनर्घशीला महीयन्ते । तत्र तत्र विप्रवणिग्वेषेण, दुष्प्रवेशप्रदेशेषु यतिवेषेण च प्रविश्य, द्वेष्योदासीनमित्रबान्धवानां साध्वसाधु चरितं वचनं च विजानताम्, संदिहानैः परैर्निपीडितानामप्यात्मानं कथमप्यप्रकाशयतां चाराणां मुखेन प्रत्यहमबोधि[1] वार्ताः सर्वाः । चारा अपि यथासामर्थ्यमेकान्त एव सममान्यन्त न प्रकाशम् । चारचक्षुरवगतसमग्रवृत्तान्तः कर्मस्वशिथिलमनाः समुदयुङ्क्त तत्कालकर्तव्येषु । नाजीगणदाफलोत्पादमुद्युञ्जानः प्रत्यूहपरंपरामान्तरालिकीम् । हन्तुमुद्यतो हि माद्यन्द्विपः सोढ्वापि सुतीक्ष्णशराभिघातवेदनामरिष्वपराक्रममाणो न निवर्तते ॥

शक्त्या मत्या धृत्या श्रिया वाऽन्यैः किं फलमुद्योगविरहे ? अपेक्ष्य सर्वसत्वान्समधिकशारीरबलसंपन्नोऽपि, समुज्ज्वलन्नपि तीक्ष्णतरदन्ताभ्यामनुद्युञ्जानो मतङ्गजः शार्दूलाद्बिभेति । यावानुद्योगस्तावानुच्छ्रायः । नीरानुसारी हि सारसदलानां द्राघिमा भवति । तिरश्चकार कीर्तिप्रदीपिकानिर्वापकमालस्याख्यमन्धं तमः सुदूरतः । हन्त ! स्वयं मरणशीला अपि अचिरान्मुमूर्षव इवालस्यं दीर्घसूत्रतां विस्मरणं निद्रां चाद्रियन्ते मर्त्याः । [2]उष्णक एव प्रभवति कुलपौरुषगतमपनेतुं कलङ्कम् । अनलसो हि नरपालस्त्रिविक्रमाक्रान्तमखिलमपि भुवनतलं भर्तुमीष्टेतरामनायासेन ॥

अस्यैवमगणितकल्याणगुणैकनिकेतनस्य साकेतनाथस्य, समुचितसाधनसमयोपायापायनिरसनविशिष्टकर्मस्वरूपाभिज्ञाः कर्माचरणेषु व्यवस्थिताः प्रजारक्षणे जागरूकाः नयदर्शनोक्तविधिनिषेधेषु परिणतप्रज्ञाः अनारतमशिथिलप्रयत्नाः सन्धिविग्रहयोः कुशलाः विविधोपायेषु सुशकानुष्ठानमेकं निर्धार्य कार्यनिर्वर्तनप्रकारमभिजानन्तः, सन्धिविग्रहयोः पात्रविशेषमवधार्य ईदृशेषु सन्धिरीदृशेषु विग्रह इति निष्कृष्य राज्ञे निवेदयन्तः, नैसर्गिकप्रतिभासहकृतसकलदर्शनार्थज्ञानसंपन्नाः लोकयात्राऽविरोधेनैव कर्म शास्त्रीयमपि प्रवर्तयन्तः, वचनमनादृत्य परमार्थविदाम्, मोहाद्विपरीतवादिनमप्यसंत्यज्य स्वामिनं पुमर्थमेव तस्य क्रियासमभिहारेण प्रतिपिपादयिषन्तः, निःसंख्यानां राज्ञो विपदां निदानं स्वप्रमादं कथमपि परिजिहीर्षन्तः मधुराभिभाषणेन जगदखिलमपि स्वायत्तीकुर्वाणाः, असकृच्छ्रावितानामप्यभिजनयत्यौनः पुन्येन शुश्रूषाम्, आवर्जयच्छत्रूणामपि चेतांसि, शब्ददोषैरस्पृष्टं कदाऽप्य

---

1. अबोधीति दीपजनेति कर्तरि चिण् 2. उष्णकः—शीघ्रकारी

बाधितं सत्प्रतिपक्षादिभिः सूत्रप्रायं फलवदनेकार्थप्रत्यायनसमर्थं श्रवणमनोहरं च वचनं प्रयुञ्जानाः, सन्तमपि परोक्तिषु दोषमविगणय्य फलमेव समाददानाः, कीर्त्या सह पुरुषार्थमजनयद्भ्यः कर्मभ्यः प्रयत्नेन निवर्तमानाः, पश्चात्तापदायिनीः क्रियाः कथमप्यनारभमाणाः, मनागप्यनाकलय्य शारीरमायासं निरस्य प्रत्यूहपरंपरां मनोदार्ढ्येन कर्मसु समुचितेषु प्रवर्तमानाः, अर्थोपकरणकालदेशकर्मणां स्वपरपक्षसाधारणानां निश्चित्यैव बलाबलं कर्म प्रारिप्समानाः दुर्बलेषु दण्डं त्रीनुपायानितरेषु च प्रयुयुक्षमाणाः, गजेन गजान्तरमिवैकैककर्मसमाचरणेन कृत्यान्तरफलमप्यादित्समानाः, भीत्या व्याकुलीभवन्त्यां प्रकृतौ बलिभिरभिषेणयद्भिर्मानवन्तोऽपि सन्धित्सवः मन्त्रिशिरोमणयः समासांचक्रिरे ॥

मन्त्रिसत्तमाश्चैते राजानमत्यभिगन्तारोऽनभिगन्तारश्च न बभूवुः। अभिगमे हि सार्वदिके विविधकृत्यविक्षिप्तचेतस्कतया राज्ञाऽवज्ञायेरन्। अनभिगमे च न प्रसिद्ध्येत्फलम्। अभीप्सितं राज्ञो यद्यजहुस्तत्र लिप्साम्। राज्ञः समक्षं परकर्णान्तिके भाषणं परमुखावलोकेन हासं च पर्यहार्षुः। विज्ञाय समयमिङ्गितं च राज्ञः अद्वेष्यमनल्पफलं च करणीयं श्रवणमधुरेण, अभिधेयेन गुरुणा, लघुना चाभिधानेन वचनेन व्यजिज्ञिपन्। अपर्यनुयुक्ता अपि राज्ञे हितान्यब्रुवत न तु विपरीतानि निर्बन्धिता अपि। बहुमानिता अपि राज्ञा, संस्तुता अपि चिरस्य, तदनभिमते कर्मण्यात्मनोऽनुचिते नितरां जिह्रयांबभूवुः। प्रथन्तेतरां स्म पारिषद्यहृदयानुरञ्जने भावगमीरैर्विशुद्धशब्दैर्वचोविलासैः। नैव बिभयांबभूवुः प्रत्याययितुमभिमतमर्थं सामाजिकेभ्यः ॥

सन्धिविग्रहार्थं राजान्तरोपगामिनो द्विविधा अपि दूताः बन्धुषु दधानाः प्रेम निर्व्याजं जन्मना साचिव्योचितमलंकुर्वाणाः कुलममलं स्पृहणीयतरया प्रकृत्या भूपानामभिमताः अक्षीणस्वामिपक्षविश्वासाः सन्ततमन्विच्छन्तः स्वामिने हितं वच्यावाच्ये बुद्ध्या विनिश्चित्य प्रतीपभूपसन्निधावावश्यकमभिधातुं धैर्येण पटीयांसः समुदलसन् ॥

तत्र स्वैराभिधायिनस्तु दूताः सचिवानपेक्ष्य नीतिशास्त्रेषु नदीष्णाः शतगुणम्, नैसर्गिक्या प्रतिभया, सकलवशीकरणनिपुणेन रूपेण, मीमांसितसमग्रसद्दर्शनार्थतत्त्वविज्ञानेन, बहुभ्यो बहुधा बहुश्रवणेन च बहुमाननीयाः, प्रतिनृपतिषु कारणमुखेनैव कार्यजातं प्रतिपादयन्तः तदनभिमतमपि कृत्यमभिमतमिव निजोक्तिचतुरिम्णा ग्राहयित्वा स्वामिलषितं साधयन्तः, क्रूरदृष्टीनपि तानविगणय्य तत्तत्कालदेशसमुचितकृत्यनिर्वर्तनव्यग्राः तेषामवस्थाम्, कालदेशौ च वक्तव्यांशसमुचितौ विशेषतः प्रसमीक्षमाणा व्यराजन्त ॥

अभिहितान्वभिधायिनस्तु दूताः अर्थकामाभ्यामविपर्यसनीयस्वभावाः, परेषां सचिवैर्मैत्रीमाकलयन्तो हृदयदार्ढ्यमतितरामाबिभ्रतः, भीत्या प्रत्यर्थिभूपेष्वप्रयुञ्जानाः कथमपि नीचां वाचम्, तूष्णीकृत्यापि जीवितापायं स्वामिकार्यनिर्वहणप्रवणा बभूवुस्तराम् ॥

—:*:—

# ॥ अयोध्यायां प्रजाः ॥

प्रशासति च तस्मिन्महाराष्ट्रविवर्धने पुरुहूत इवामरावतीमिक्ष्वाकूणामतिरथे दशरथे श्रीमतीमयोध्यां, यथा राजा तथा प्रजा इति नीत्या व्यद्योतिषत दिविषदविशेषा उपचितसम्पत्समुन्मेषा मानुषा मानुष्यश्च स्वतन्त्रा, देशभक्त्या समभ्युन्नताः परस्परमकलङ्कायमानाः परमधार्मिकतया पुरुषायुषजीविनः शीलवृत्ताभ्यां महितव्यतया महर्षिभ्योऽभ्यधिकाः सत्यवादरताः स्वैः स्वैरनिधनैरेव धनैरलुब्धाः कामोपभोगपरमा धर्मोपरोधादृते, समावर्जयन्तश्चेतांसि परमार्जवेन, गोमन्तः प्रभूतधनधान्या बहुश्रुताः कीर्तिमन्तश्च ।

द्रष्टुमपि तत्र न शक्यमेकं कामिनं कदर्यं नृशंसं नास्तिकमविद्वांसं वा । अनृतकाभ्यसूयकानग्न्याहिताशक्तक्षुधितक्षुद्रकतस्करनिर्वृत्तसङ्करव्रतरहितासहस्रददुर्गतक्षिप्तव्यथितव्याधितप्रभृतीनामासु परं श्रवणगोचरता । अदीप्यन्तात्यन्तमतिरतयो युवतयो मदनमोहनाश्च युवानो लावण्यसौन्दर्यसौकुमार्यैर्विनैव दिव्यैराभरणैर्निसर्गतः सिद्धैः ।

आसीत्क्षत्रमुखं ब्रह्म वैश्याश्च क्षत्रमनुसस्रुररस्यमुदस्य व्यत्यासं विभक्तेषु लोकक्षेमकारेषु⊕ स्वेषु स्वेषु धर्मेष्वास्थितांस्त्रीनुपचरन्तो वर्णान् व्यभानुत्तमा* अप्यभूताभद्रसङ्कल्पाः कदापि, वर्णाः । लोकस्य परमेश्वरस्वरूपेण परिस्फुरतः कैङ्कर्यलक्षणं किमपि कल्याणं कृत्यं कृतसुकृतैकलभ्यं लक्ष्यमास्थाय परमरागद्वेषमफलाभिसन्धानञ्च स्निग्धाः परस्परमनलसा विलेसु,र्व्याप्रियमाणा वर्णाश्चत्वारोऽपि चतुराः कर्मस्वात्मीयेषु, स्वापत्यनिर्विशेषं परिपोषकस्य स्वेषां सुराज्ञो दशरथस्य महाशिरोभारमपहर्तुकामा इव सभक्त्यतिशयम् ।

कृत्यविरहिताश्चातः समेऽपि न्यायाधिपाः विस्मृतनीतितन्त्रा जिह्वयाम्बभूवुर्वोढुमात्मीयं पदमपि बत ! महनीयं महान्तः ।

धृष्टिर्जयन्तो विजयः सिद्धार्थोऽर्थसाधकोऽशोको मन्त्रपाल इतीमे सुमन्त्रेणाष्टमेन शिष्टा विशिष्टाश्च व्यद्युतन्मन्त्रिणः । विदितवेदितव्यावैन्धातामथर्वनिधी भगवन्तावृत्विजौ वसिष्ठो वामदेवश्च वाचस्पतिसध्र्यञ्चौ ॥

# ॥ चक्रवर्तिसभासन्नाहः ॥

इत्थम्प्रभावेनापि सार्वभौमेन पङ्क्तिरथेन नैतदवध्यन्वभावि भाग्यैकभोग्यं निरुपमं सुखं परमं सत्पुत्रवक्त्रसहस्रपत्त्रसन्दर्शनतदङ्गसमालिङ्गनतन्मुखोदीर्यमाणवीणाक्वणनमाधुर्यातिक्रमणनिपुणभणनास्पष्टतासमाकर्णनकिञ्चिदालक्ष्यकोमलकुट्मलायमानकतिपयदशनमनोज्ञहसनानुभवजन्यं, यतः सुतोदयकृते नासीद्धर्मः समस्तानपि धर्मानाचरतोऽपि तस्य महात्मनः । पुत्रोत्पत्तेश्चर्णनिर्वर्तकत्वं नरकसमुद्धारकत्वमनुत्तमलोकप्रापकत्वं वंशाभिवर्धकत्वञ्च काम मनुचिन्त्य श्रुतिस्मृतीतिहासप्रसिद्धमनपत्यताञ्च समयमियन्तमात्मनः क्रियासमभिहारेण कथमप्यशान्तस्वान्तस्तान्तोऽत्यन्तमाप तापमेकातपत्रेण सततमुद्दीपितोऽपि । तदन्वन्तर्यामिप्रेरणया प्राक्तनसुकृतपरीपाकवशेन कालानुकूल्योपनिपातेन च प्राप्तसन्मतिरेवं निर्णिनाय नायकः प्रजानाम् । पापं हि प्रतिबध्नात्यपत्योत्पत्तिं, तदपनोदनाय

---

⊕ अणन्तम्  * उत्तमाः = अन्त्याः

हयमेधेन यक्ष्येऽहम् । "सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति हि भगवती श्रुतिर्ब्रूते । स ह्यश्वमेधो न परं पापप्रतिक्षेपकोऽपि तु श्रुतिवलेन सहितः सन्नुपास्त्या ब्रह्मलोकप्रापकोऽपि नातः परमुत्पश्यामि समुचितमुपायमिति । अनुपदमेव सामाजिकान्विधाय द्विजान्यजिज्ञिपदभिप्रायमात्मनः साम्राज्यमपि नाम्ना, जानराज्यमेवैतदिति स्फोरयितुकामः । यत एवमविधायाणुरपि विषयस्तेन स्वयं नैव विनिर्णीयेत किमुत महान्? लोकदृष्ट्या सार्वभौमोऽपि स्वं सेवकमेव केवलं लोकानामलोकत लोकोत्तरप्रकृतिर्विशिष्यानुशिष्टो वसिष्ठाद्यैश्च । अतस्सर्वस्वमपि त्यक्तुं व्यराजत सन्नद्धः । लोकक्षेमैकचक्षुष्का हि क्षिताविक्ष्वाकवः । सन्ततिप्राप्तीच्छापि बलवती न केवलं स्वार्थाय किन्तु स्वानन्तरमयोध्याया राजन्वतीत्वायैव समुदभूत् ।

सर्वेऽपि चक्रवर्तिनमैकमत्यादुरीकारमुदीरयामासुः सम्भ्रियन्तां सम्भारा विमुच्यताञ्च तुरगः सरय्वाश्चोत्तरे तीरे विधीयतां यज्ञभूमिरिति । प्रशशंसुश्च भूसुरा महर्षयश्च सर्वथा प्राप्स्यसे पुत्रानभिप्रेतान्यतस्तवाभ्यर्हिततरधर्म एवाभिलषितैकसाधनतया मनीषेयमुदपद्यत विजयस्वेति । आविर्भूतज्योतिषो हि महीदिविषदो न कदापि भाषेरन्विप्लुतार्थां व्याहृतिं, भद्रा हि त्रयीलक्षणा लक्ष्मीस्तेषां वदनारविन्दे नरीनृत्यमाना लक्ष्यते ॥

तदानीञ्च सचिवोत्तमोऽपि सुमन्त्र एकान्ते जगाद जगतीपतिमयमृत्विग्भिरुपदिष्टः पुरावृत्तः श्रुतो मयापि । पूर्वमेवाचकथद्भगवान्सनत्कुमारः सन्निधावृषीणां भावितात्मनाम् । विभण्डक इति विश्रुतोऽस्ति भगवतः सुतः काश्यपस्य । ऋश्यशृङ्गश्च तदात्मजस्तव भवति जामाता । स ते पुत्रांश्चतुरश्चतुरान्विधास्यति निर्वर्त्येष्टिं शिष्टः पुत्रीयामिति ।

सकौतुकं पृच्छ्यमानश्च दशरथेन प्रभावमृश्यशृङ्गस्य सुमन्त्रः कुलामात्यः सनत्कुमारोक्तप्रकारेण कथयाम्चभूव—

## ॥ ऋश्यशृङ्गः ॥

विभण्डकात्मजोऽपि "न क्वापि त्वया गन्तव्यमि"ति पित्राज्ञामनुरुन्धानो वन एव वनचरनिर्विशेषं वर्धमानः प्रविमलेन नैष्ठिकब्रह्मचर्येण ब्रह्मज्ञतया प्रत्यस्तमितभेदप्रत्ययः शाश्वतः स्त्रीस्वरूपेण[2] सञ्जानानः चाक्षुषयन्नपि च वनेचरमृगाक्षीरात्मारामतया स्त्रीपुंसव्यत्यासमविद्वानिव वर्तमानः पितरं गुरुभूतमग्निञ्च शुश्रूषमाण एवातिवाहयामास स्वमनेहसम् । समये च तस्मिन्नङ्गेषु विश्रुतकीर्तिर्भ्राजते राजा नाम्ना रोमपादः यस्य च पादौ पद्मरेखाङ्कितौ । रोमेति हि नाम कथितं पद्मस्य पूर्वसूरिभिः । तस्य व्यतिक्रमादत्युग्रोऽभूदवग्रहः प्रजापीडाकरः । दुःखितोऽत्यन्तं नृपतिरपि समानीय माननीयानवनिदेवान्बहुश्रुतान्विधिवदाराध्य, समादिशन्तु भवन्तः प्रायश्चित्तं मम किमपीति प्रार्थयामास । अनुतापो हि महान्सति पथि प्रवर्तयितुमपराधिनमीश्वरो भवति ।

---

1. इदमेव साधु तद्धितान्तत्वेना गुणवचनतया पुंवत्त्वानापत्तेः ।
2. संज्ञोऽन्यतरस्यां कर्मणीति, कर्मणि तृतीया

पारदृश्वानश्च ते वेदशास्त्राणां विभण्डकतनूद्भवमुपायैरनपायैः समैः समानय, महीपाल! प्रीणयित्वा सत्कारैः सुसमाहितः शान्तामस्मै प्रयच्छ। अतिमात्रपवित्रब्रह्मचारिणे हि कन्याप्रदानं न केवलं प्रपत्स्यते प्रायश्चित्ताय किन्तु सकललोकक्षेमायापीति प्रकाशयामासुराशयम्। रोमपादोऽप्यचिचिन्तन्निरवधिकतपोबलतयानिवार्यवीर्यः स भविष्यत्यानेयः केनाभ्युपायेनेति। तदनु, वारणं वारणान्तरा इव ब्राह्मणं ब्राह्मणा एव समानेष्यन्तीति प्राप्त निश्चयः पुरोहितादीन्नयुङ्क्त सप्रश्रयं, यतस्तदेकसाध्ये कर्मणि महान्तोऽपि ते नियोगमर्हन्त्यतोऽयं न दोष इति।

ते तु भृशमबिभ्युः ऋषेः। अतः संमन्त्र्य सचिवैस्तद्दर्शितानयनप्रकारः संविधापयाञ्चक्रे विशाम्पति स्त्वरितम्। येनर्षेर्ब्रह्मचर्यवैकल्यदोषस्तत्पितृशापदोषोऽवर्षदोषः स्पृश्येतरसम्पर्कादिर्वा दोषो न सम्भवेदिति सविचारं निरधारि।

तदनुसारेण सारङ्गाक्ष्यो वारवरवर्णिन्यः स्फुरणिन्यः सौदामिन्य इव सुवर्णाभरणैः प्रकृत्यैव सुरूपिण्यस्तरु णान्तःकरणहारिण्यः पर्णकुटीरं वैभण्डकेरासेदुरपरस्येव मार्तण्डस्य, कुमारस्यापि सतस्तपसा प्रवयसः।

अविदूर एव तस्थुराश्रमस्य सुभ्रुवः प्रतिपालयन्त्यः। ततः कदाचित्तं देशं यदृच्छया प्राप्तमृषिसुतं निरीक्ष्य, रुचिरवेषास्ता वारयोषाः स्वैरदभ्रविभ्रमैर्मदयन्त्यो गायन्त्यश्च मधुरमधुरैः स्वरैः, शनैर्भियाभ्युपेत्य व्याजह्रुः कस्त्वं, किञ्जातिः, कस्यात्मजः, किन्नामा, किङ्कर्मासीति। सोऽपि निसर्गजपरमार्जवोऽदृष्टपूर्वास्सुरूपास्ता निरूप यन्दर्शनजन्यं कमपि स्नेहं 'जन्मान्तरवासनावेशवशेनेव समुद्भावितं प्राप्तः पितरमात्मनः कथयामास। पितोर्वश्या मिव वेश्यास्वयमपि ब्रह्मचारी तत्क्षणमास्त किञ्चिदिव विकुर्वाणः। सर्वमोहनो हि बलवान्मदनः। पुरा किल महाभूततटाकाख्ये सरस्युपस्पृशतो विभण्डकस्य दृष्ट्वोर्वशीं स्ववारविलासिनीमस्खलद्रेतः। तत्कापि मृगी नि पीयाम्भसा बभूव गर्भिणी। तस्याञ्चाहमस्मि जातो नाम्नर्श्यश्रृङ्गः सत्यार्थेन। नैष्ठिकमनुतिष्ठन्वर्ते ब्रह्मचर्यं गुरुमनु वर्तमानोऽत्र पितरमिति।

अनुपदमाजुहावेदम्प्रथमतयोद्भूतेनानुरागेण मधुरदर्शनानां वः करिष्ये यथाविधि पूजामागच्छतेति। इदमर्घ्यमिदं पाद्यमिदं मूलमिदं फलमिति चकारातिथ्यमादरभरेण। समुत्सुका अपि ग्रहीतुं विभण्डकागमनात्त्र स्यन्त्यस्तत्क्षणं गन्तुमेव दध्युस्ता मतिम्। अस्माकमपीमानि गृहाण मुने! फलानि स्वाद्यानि भद्रमस्तु ते भक्षयस्व मा विलम्बं कृथा इति व्याहरन्त्य एव सहर्षोद्रेकं दृढं पर्यष्वजन्त। सोऽपि सुखं किमप्यवाप निरुपममपूर्वमवाङ् मनसविषयम्। सुभगाहस्तैर्दीयमानानि च मोदकानि मोदमानः साकं भक्ष्यान्तरैरास्वादयंस्तेजस्वी फलानीत्यभ्य मन्यत। मधुरपुरन्ध्रयश्च तमापृच्छ्य विभण्डकाद्भिया यदा निर्जग्मुस्तदारभ्यैव भृशं मनसोऽन्वभूदस्वास्थ्यं, कदा पुनरपि ताः पश्येयमिति। परेद्युरागम्य पितृविरहितमाश्रमं गायन्त्यो नृत्यन्त्यश्च, त्वमेह्याश्रममस्माकं तत्रापि सत्कारः समधिकश्रीसमृद्धो भविष्यतीत्यनुनयैः शनैरानिन्युस्तपस्विनं पण्यमानिन्यः।

निर्वर्त्य कृत्यमुटजमाटीकमानो भगवान्विभण्डकोऽपि प्रतीच्या दृशा सर्वमबोधि। प्रशशंसतराञ्च "अहो! ब्रह्मवित्तमता मे प्रियपुत्ररत्नस्य। प्रारब्धवशाद्भाविनं क्षत्रियस्त्रीसम्बन्धं, तद्द्वारकञ्च दाशरथिजनिनिदानयज्ञनिर्वर्तनं निखिललोकक्षेमलाभञ्च जानन्नेव हि गणिकाभिर्भीत्यनुत्पत्तये तथा व्यवहरन्, सर्वज्ञस्यापि स्त्रीपुंसस्वरूपापरिज्ञानं

स्वस्य दयालुरभिनयन्ननुरुध्य तास्तपस्विनीरबलास्तपस्वी प्रस्थितवानङ्गान्। कः कर्तुमुपकारं प्रभवति लोकाय महान्त मीदृशं मत्पुत्रादृते। यन्नैष्ठिकमप्यत्यजद्ब्रह्मचर्यं भविष्यति च महत्तरो गृहमेधी। ब्रह्मविदेक एव हि स्वरूपा दप्रच्युतो यथा तथा वा भवँल्लोककल्याणानि कलयितुं कुशलः सकलानि। शरीरं खल्वनुप्रविष्टः परमेश्वरः सतो जीवन्मुक्तस्य विहरति नैकप्रकारम्। अत्र च परमकृपया जगदनुग्रहे जीवात्मनामेव महत्किमपि भवति कारण मदृष्टम्। अनहम्भावसम्भावितात्मनो विशुद्धचिदाकाशस्वरूपस्य, गणिकापरिरम्भणतद्वितीर्णमोदकभक्षणादिना को वा भविष्यति दोषः। सर्वथा सर्वदाप्यविपरिलुप्तानुग्रहादिसर्वशक्तिसम्पत्समृद्धस्य पुत्रस्य लाभोऽपि मम सफलः समस्ताभ्युदयस्य दायकश्च शुकलाभ इव भगवतो व्यासस्य। हन्त! मे परमं भागधेयमित्यमज्जत्प्रमोद वारान्निधौ॥

यावदृश्यशृङ्गः प्रविवेश पुरीं, तावदेव देवः सहसा ववर्ष लोकान्प्रह्लादयन्। हर्षेण वर्षेण च समभ्यागतं प्रत्युद्गम्य पावकमिव दीप्यमानं प्रणिपत्य कुमारमुनिं समर्चन्नर्घ्यपाद्याचमनीयाद्यैर्यथाविधि, ययाचे प्रसादं रोमपादः प्रवेश्य च प्रह्वः स्वान्तःपुरं शान्तेन स्वान्तेन शान्तां प्रयच्छन्परमाप प्रहर्षम्। ऋश्यशृङ्गोऽपि सम्यगाराधितः शान्तया साकं धर्मपत्न्या तानध्युवास प्रमोदादङ्गान्। इक्ष्वाकूणाञ्च विमले कुले जन्मभाजः सुराज्ञो दशरथस्य सेत्स्यति सख्यं महदङ्गराजेन। तमुपेत्यानपत्योऽस्मि धर्मात्मन्! दुहितुर्मे शान्ताया भर्ता सन्तानार्थं कुलस्य क्रतुं निर्वर्तयतादिति याचिष्यमाणाय पङ्क्तिरथाय रोमपादोऽपि प्रदास्यते पुत्रवन्तं शान्ताभर्तारम्। प्रतिगृह्य च तं विप्रं विज्वरःप्रहृष्टेनान्तरात्मना क्रतुमाहरिष्यति साकेतनाथः यज्ञार्थं प्रसवार्थं स्वर्गार्थञ्च नरेश्वरो वरयिष्यंस्त मृश्यशृङ्गं लब्धकामोऽमेयविक्रमैर्वंशप्रतिष्ठानकरैः सर्वेष्वपि विश्रुतैर्लोकेषु विलसिष्यति। एवं कथितवान्कथां भगवान्सनत्कुमार इति॥

## ॥ ऋश्यशृङ्गानयनम् ॥

ततः सुमन्त्रवचनात्प्रातिष्ठत वसिष्ठेनाभ्यनुज्ञातः स्वयमेव सभृत्यबलवाहनः सान्तःपुरश्च सह सचिवैर्दश रथः। व्यतिक्रम्य गिरिसरित्सरोवरकान्तारादीनि देशमाससाद यमृश्यशृङ्गोऽधितिष्ठति। अदर्शच्च रोमपादसमीपे जाज्वल्यमानं जातवेदसमिव भगवन्त वैभण्डकिम्। सत्कृत्य च दशरथं, मुनिसुताय महामतये शान्ताया जन कोऽयं पिता तव श्वशुरः समर्ह्य इत्यावेदनेन प्रामोमुद्यत रोमपादः। सप्ताष्ट दिवसांस्तत्रैव सत्कृतो नयन्दशरथः प्रावोचत रोमपादं तव सुतेयं शान्ता सह भर्त्रा मम नगरमायातु कार्यं हि विद्यते बृहदुद्यतमिति। तथेति प्रतिशृण्वन्मुनिसूनुरप्यनुज्ञातः क्षितिपेन शान्तया प्रतस्थे। अन्योन्यमञ्जलिं वितन्वानौ प्रेम्णा च परिरभमाणावुरसा ननन्दतुरमन्दं राजानौ। प्रतिष्ठासमानश्च मानवेन्द्रो रघुनन्दनः पौरेभ्यः प्रेषयामासाशुगामिनो दूतान्, क्षिप्रमेव धूपितं सिक्तसम्मृष्टं पताकाभिः परिष्कृतञ्च देदीप्यतां नगरं समग्रमिति। चक्रवर्तिसमागमेन मोदमाना यथादेश मलञ्चक्रुर्जना नागराः। ततः पुरस्कृत्य द्विजर्षभं स्वामिसम्बन्धेन सहस्रगुणमलङ्कुर्वाणमिव भ्राजिष्णुं नगरं शङ्ख दुन्दुभिनिर्घोषैः प्राविविशच्च विशाम्पतिः। सहस्राक्षेण काश्यपमिव पश्यन्त्यः प्रजा अमन्दमानन्दमविन्दन्त।

ऋषेरुप[1]वाहनाच्च कृतकृत्यममन्यत स्वं दशरथोऽपि । अन्तःपुरपुरन्ध्रयोऽपि पूर्वं कन्यात्वदशायां जातुचिदा गतवतीमपि सम्प्रति सह भर्त्रा समागच्छन्तीं शान्तामीक्षित्वा विशालाक्षीं परामवापुः प्रीतिम् । सा च राज्ञा ताभिश्च विशेषतः पूज्यमाना नक्तन्दिवमुपलाल्यमाना च पितृगृहे सुखिता सती भर्त्रा कञ्चिदुवास कालम् । पित्रोर्हि गृहा भवन्ति भूयः स्पृहणीया वरवर्णिनीनां विशेषेण च रमणरमणीयानाम् ॥

# ॥ अश्वमेधसंविधानम् ॥

अवाप्तसमस्तकामोऽप्यनपत्यतया दूयमानमानसः पङ्क्तिरथः "सर्वं पाप्मानं तरती"ति श्रुत्या, "सार्वभौमोऽश्वमेधेन यजेते"ति स्मृत्या च, तन्मूलप्रबलकिल्बिषनिबर्हणनिपुणं हयमेधं स्वाधिकारानुरोधादुद्यतः कर्तुं सन्दर्भप्रतिभातसुमन्त्रोदीरितसूक्त्या जामात्रुपलालनच्छलेन शान्ताभर्तारमानीयर्श्यशृङ्गं, वसन्ते च पौर्णमास्या चैत्र्या चारुतरे यथापूर्वसङ्कल्पं साङ्ग्रहणीमिष्टिं कर्तुमियेष ।

प्राप्तावसरे च तत्रर्त्विग्वरणे देववर्णिनमवृणीत ब्रह्मत्वेन प्रथममृश्यशृङ्गम् । ऋषिश्च स सम्भ्रियन्तां क्रतूपकरणानि तुरगोऽपि विसृज्यतामध्युत्तरतीरञ्च सरय्वा विधीयतां यज्ञभूमिरित्यादिदेश ।

अथ "अपदातीनृत्विजः समावहन्त्यासुब्रह्मण्याया" इति विहितानि क्रमेण करणीयानि कर्तुमृत्विग्वरणानि, सुमन्त्रं प्रति क्षिप्रमृत्विजः समानय श्रुतिविदः, सुयज्ञं वामदेवं जाबालिं काश्यपं वसिष्ठञ्च पुरोहितं सत्कृत्य समागमय साकं द्विजातिभिरितरैरिति प्रेरयामास दशरथः । तथैव कृतवति कुलामात्ये सम्यगभ्यर्च्य तानुवाच लब्धुकामः सदपत्यं पद्यया शास्त्रीयया यक्ष्ये हयमेधेन, प्रभावादृषिपुत्रस्य प्राप्स्याम्यभीप्सितानीति । वसिष्ठप्रभृतयश्च साधु साध्विति तदुक्तमन्वमन्वत ।

ऋश्यशृङ्गपुरोगाश्च विध्यनुरोधाद्राजपुत्राद्यैः सोपाध्यायश्चतुर्भिः ऋत्विग्भिश्च [2]सत्रा विसृज्यतां तुरगः । विविक्ते पवित्रे च सरयूत्तरपारे निर्मीयतां यज्ञमेदिनी । परमधार्मिकः प्राप्स्यसि पुत्रानमितविक्रमांश्चतुर इत्यन्वग्रहीषुर्हर्षुलाः । ततश्च द्विजात्युक्तिमप्रत्यूहमनपराधञ्च निर्वर्तयितुं चोदयामास त्वरितममात्यान्, छिद्रमत्र मृगयेरन्विद्वांसो ब्रह्मराक्षसाः । प्राप्ते हि प्रत्यूहे कर्ता क्रतोस्सद्यो विनश्यति । अतःशान्तिकर्मपुरस्सरं शास्त्रवर्त्मसमनुसारेण क्रतुरेष क्रमेण यथा परिसमाप्येत तथा संविदद्ध्वमिति । प्रतिपूज्य च मन्त्रिणो यथाज्ञसमकुर्वत । धर्मज्ञं स्तुत्वा पार्थिवर्षभं लब्ध्वाचानुज्ञां गतवत्सु द्विजन्मसु विसृष्टामात्यः स्वान्तःपुरमग्निवेश्मनो विवेश विशांपतिः ॥

---

1. उपवाहनं = आनयनम् ।
2. सत्रा = साकम् ।

## ॥ शालाप्रवेशः ॥

प्राप्ते च पुनर्द्वितीयस्मिन्वसन्ते पूर्तिमगात्संवत्सरः। यतोऽमावास्या प्राप्ता तत्र पौर्णमास्यामेव भाविन्यां प्रसवार्थमश्वमेधेन यक्ष्माणो दशरथः स जगाम देवयजनम्। तत्र ब्रह्मौदनमारभ्य हयमेधसमाप्तिं यावत्स्वातन्त्र्यविर हाद्यजमानस्य, स्वयं यज्ञोपकरणसम्पादनाद्ययोगादध्वर्युणैव सर्वस्यापि कर्तव्यतया तदर्थमध्वर्युत्वेन वृतं वसिष्ठमभि वाद्य भगवन्तं सप्रश्रयं, यथान्तरायः कोऽपि नोपजायेत तथा क्रत्वङ्गेषु संविधीयताम्। भवान्हि न परं स्निग्धः किन्तु परममहान्गुरुरपि। तद्भवतैव भारश्चायमुद्यतः सर्वोऽपि यज्ञस्य निर्वोढव्यः कतर्व्यश्च कृपयार्त्विज्यमर्हत्त ममिति प्रार्थयाञ्चक्रे चक्रवर्ती। ॐ मित्यभ्युपयन्वसिष्ठः प्रयोगेषु नदीष्णान्ब्राह्मणान्वर्षीयसः तद्द्रव्यसमाहरण स्वाम्ये राज्ञा नियुक्तचरान्, भृतकानाकर्मपरिसमाप्ति सुस्थितिमतः, इष्टकादिकृतः, तक्ष्णः श्लक्ष्णतया स्रुक्स्रुवच मसग्रहयूपादीनां निर्मातॄन्, वापीकूपतटाकादीनाञ्च खनकान्, चित्रकरान्, रसाभिनायकान्नटान्, भावाभिनय कृतो नर्तकान्, प्रयोगशास्त्रविदः सर्वानप्याज्ञापयामास यथा सर्वं सुविहितं स्यान्नकिञ्चिदपि हीयेत तथा संविदधत प्रीत्या स्निग्धेन च चेतसेति। यथाज्ञप्तं कृत्वा प्रहर्षयांबभूवुश्च ते वसिष्ठं श्रेष्ठमृत्विजाम्।

हन्त! सुरुचिरं हि स्फुरति वैधं परमं किमपि पारार्थ्यं समृद्धेः सुराज्ञः साधुसाधारण्याः। आच कर्म करादामहोपदेशकमुच्चावचाः शरीरायासेन बुद्धिवैभवेन च जीवनभाजः समेऽपि समुचितं दानमानादिभिः सच्चिकीर्ष्यन्ते पवित्रतरे क्रत्वादौ। इदमेव परं परमेश्वरस्य विश्वाकारस्य स्फुरतः प्रशस्यतरमाराधनम्। नातः किमपि पृथगस्ति देशसेवनं नाम। वैदिक्या सम्पदा समृद्धं हि देशसमाराधनं परमं बिभर्ति सौभाग्यं सुरभिलमिव कलधौतम्, अहो! धन्यतमो नः सार्वभौमः कथमन्यथोत्पत्तुमर्हत्यस्य पुत्रत्वेन भगवान्परमात्मा सर्वा त्मकः। सफलनभूम्मे प्रतिपालयतश्च चिरस्य कुलपुरोहितस्थानमपीति त्रिकालज्ञोऽभिसन्धाय तपोधनशिखामणि ररुन्धतीपतिरपि, निमन्त्रयस्व धार्मिकानुर्वीपतीन्सत्कृत्यचानय चातुर्वर्ण्यं स्वधर्मनिरतम्। सप्रश्रयमाराध्य समाहूय न्तामेते भवतैव सत्यपराक्रमः शास्त्रार्थानां वेत्ता च मिथिलानाथो महाभागः, स हि चिरत्नसुहृदस्मद्राजसिंहस्य। सततं प्रियवादी काशीपतिः, मूर्तो धर्मः प्रसिद्धो वृद्धश्च केकयराजः श्वशुरो राजशेखरस्य। चिरस्य वयस्यः परमो रोमपादः शक्रप्रतिमोऽङ्गाधिपतिः, अन्यूनो नः क्षितिपतेर्वैभवैः पेशलप्रकृतिः श्वशुरः कोसलानां राजा, सर्व शास्त्रविशारदो मगधाधिप इति, प्राग्देशवर्तिनः पार्थिवपुङ्गवान्सिन्धुसौवीरान्सुराष्ट्रदेशभवान्दाक्षिणात्यांश्च दाक्षिण्य सम्पन्नांश्चोदय शासनमादाय राज्ञो दूतमुखेन चेत्याज्ञापयामास सुमन्त्रं कुलपक्षपातिनमिवात्मानं, ये चेतरे स्निग्धा राजानस्तेऽपि सानुगबान्धवा आहूयन्तां द्वारीकृत्य दूतानिति च। मुनिशासनं मूर्धनि दधानः कुलामात्यः स्वयमेव सत्वरं प्रययौ।

कर्मान्तिकाः सर्वेऽपि वसिष्ठाय यदुपकल्पितं सर्वं तद्विन्यवेदयन्। भगवानपि, भवद्भिर्यज्ञकर्मणि न कोऽपि परिहास्यः, अवज्ञया हेलया वा न दातव्यं, हन्यादेव कृतमवधीरणया दातारं, नात्र कार्यः संशय इत्यु पदिदेश। ततः कतिपयैरेवाहोरात्रैर्महीक्षितः समवेत्य समायाता रत्नान्युपायनत्वेन बहून्याददानाः। सुतरां प्रीतिमांश्च वसिष्ठः नरश्रेष्ठ! तव शासनेन सन्निहितास्त्वरितमेव सोपहाराः सर्वे नृपतयः, सत्कृताश्च मया यथार्हं,

संविहितञ्च सर्वं यज्ञियं, सुसमाहितञ्च राजपुरुषैः, निर्यातु भवान्यष्टुं समन्ततः सर्वकामसमुपेतं यज्ञायतनम् । मनसेव विनिर्मितं समस्तसौभाग्यलक्ष्म्याः किमपि नृत्यस्थलमिव समुज्ज्वलितं भवानर्हति साह्लादमवलोकितुमिति प्राचूचुदच्च । वसिष्ठस्य महर्षेः ऋश्यशृङ्गस्य च वचनाद्दिवसे शुभनक्षत्रे निर्गतो जगतीपतिः शालाम्प्रति, शङ्ख दुन्दुभिमृदङ्गमुखवाद्यघोषैर्मङ्गलैः, पटहकाहळादिध्वनिभिश्च स्वस्तिवादमुखरै र्भूसुरैस्सह सङ्गच्छमानोऽत्यच्छमनाः । ततोऽधिष्ठाय यज्ञवाटं वसिष्ठमुखाः पुरस्कृत्य मुनिवरमृश्यशृङ्गं यथाशास्त्रं प्रारभन्त क्रतुचक्रवर्तिनम् । चक्रवर्ती च साकं पत्नीभिरुपाविशद्दीक्षां लक्ष्मीवान् ॥

## ॥ हयमेधसमारम्भः ॥

ब्राह्मणमृश्यशृङ्गं पुरःस्कुर्वाणा धरणिगीर्वाणाः प्रवर्ग्यब्राह्मणोक्तं कर्म, तथातिदेशप्राप्तञ्चोपसदं सर्वं निर्वर्तयाञ्चक्रुः । बहिष्पवमानादिभिराराध्य तास्ता देवताः प्रवर्ग्योपसदयोरवसाने चक्रिरे प्रातर्माध्यन्दिनतृतीयसवनानि । प्रादायि च विधिवदिन्द्राय सोमांशः सश्रद्धमिन्द्रग्रहनिष्ठः । सम्यगभिष्टुतश्च सोमराजः स्तोत्रशस्त्रैः पापप्रणाशकः । अनुपदमाहुयाञ्चक्रिरे सवनत्रयाच्छकादीन्देवाधिपानृश्यशृङ्गादयः शिक्षाक्षरसमन्वितैर्दिव्यैर्म[1]नुभिः । गीतिभिर्मधुरैश्च मन्त्राह्वानैर्दिवौकसामदुर्हविर्भागान्होतारः । ब्रह्मवत्त्वादसम्भाविताहुतास्खलितं समस्तं निरवर्ति क्षेमान्वितम् । अहस्सु यज्ञियेषु श्रान्तः क्षुधितो वा नैवासीदविद्वानशतान्तेवसत्को वा कोऽपि विप्रः । ब्राह्मणा दासास्तापसा दिगम्बराः सन्यासिनश्च समेऽपि काममभ्यवजह्रुः । अजस्रं भुञ्जाना नैवातृप्यंस्त्रिबालवृद्धा भक्ष्याद्यैर्व्याधिताश्च । दीयतामन्नं दीयतामिति बलवती निरन्तरं प्रादुरास चोदना । अत्यशेरत शिखरिणोऽप्यन्नराशयः परितः पक्का यथापाकशास्त्रप्रक्रियम् ।

विदेशेभ्योऽभ्यागताः सस्त्रीबालवृद्धाः प्रहृष्यन्तो द्विजर्षभाः स्वादिष्ठमन्नं विधिवत्सिद्धमन्नं स्वादिष्ठमिति प्रशशंसुस्तरामाम्रेडयन्तः । शरीरदृढिम्ना कथमप्यनायस्यन्तस्तरुणवयसः सुरूपाः पटीयांसश्च चाटुवचः परिपाट्यां पर्यटन्तः सम्यक्सत्कारिणः सुमृष्टमणिकुण्डलाः सुवेषाः सन्तोषेण पर्यवेविषत । सवनयोरन्तराले च काले परस्परजिगीषयर्त्विजः प्रतिभावन्तो वाग्मिनः कौतुकेन प्रवर्तयामासुर्बहून्हेतुवादान्ब्रह्मोद्यनाम्नः । प्रतिदिवसमश्वमेधाहेषु संस्तरे चास्तीर्णबर्हिषि वृद्धैः सन्तः प्रचोदिता यथाविधि चक्रुरूमादिदैवत्यकर्माणि । अनुपदमौपवसथ्यदिवसे पश्वालम्भार्थमुच्छ्रीयमाणाय यूपाय प्राप्तावसरेऽनुब्रूहिप्रैषे षट् खादिरा यथा बिल्वसहिता भवन्ति तथोच्छ्रिताः तथा पर्णिनो यूपाः षडपि । "राज्जुदालमग्निष्ठंमिनोती "तिश्रुतिमनुसृत्य श्लेष्मातकमय एको यूपः द्वौ च देवदारुमयावुच्छ्रिताः । शास्त्रज्ञैः प्रयोगकुशलैश्च यज्ञभूम्याश्शोभार्थं काञ्चनपट्टैश्च सुष्ठुलमकारिषत ।

शिल्पिभिर्दृढतरं निर्मिता श्लक्ष्णाष्टकोटिभिश्च यूपानामेकविंशतिरेकविंशत्यरत्न्युन्नता वासोभिरेकविंशद्भिरलङ्कृता काममदीपि [2]स्थापिता । पूजिताश्च दिव्यगन्धपुष्पाद्यैः सुवाससश्च ते सप्तेवर्षयः । पूर्वं यूपोच्छ्रायतः शुल्वकर्मणि

---

1. मनुभिः = मन्त्रैः 2. दीपजनेति कर्तरि चिण्

प्रवीणैः कारिता ब्राह्मणैरिष्टका विशिष्टाः। सुतरामग्न्याधारवेदिरचकात्कृतचयनस्ताभिः। रीतिभेदादृते चयननिर्मिति चतुरैर्विप्रैराजसिह्मस्य नैकधाचरितक्रतोरग्निश्च चयननिर्वर्त्योऽसावृत्विग्भिः स्वर्णगर्भपक्षस्त्रिगुणप्रस्तारश्च पक्षौ पुच्छञ्च प्रसार्याधोवीक्षमाणः प्राङ्मुखं तिष्ठन्गरुड इव यथा सन्निवेशितो भवेत्तथा श्येनचितं चिन्वीतेतिश्रुतिविधिमनुरुध्य व्यभा चितः। श्येनोऽत्र गरुडः। पशव उरगाः पक्षिणश्चेन्द्रादिदेवतामुद्दिश्य "यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति, आरोके ष्वारण्यान्धारयन्ती"तिश्रुत्या न्यबध्यन्त यूपेषु। तत्र "पर्यग्निकृतान्ग्राम्यानेव तान्शास्त्रतो नियुक्ते विशसनकर्मणि न्ययुञ्जत। यूपेषु च पशूनां नियतं बद्धं त्रिशतं प्राधान्येन।

कौसल्याद्या महिष्योऽपि शामित्रप्रदेशे मृतं तमश्वं संस्कृत्य प्रेक्षणादिभिः प्रदक्षिणाप्रदक्षिणं सञ्चार्य कृपाणै स्त्रिभिस्तिसृभिः सौवर्णीभिः सूचिकाभिश्च निरवधिकश्रद्धया कल्पयामासुरसिपथान्।

विशसनोत्तरकालञ्च कौसल्या धर्मसिद्धीच्छया शवस्पर्शकुत्साविरहिता सती साधमश्वेन रजनीमुवासैकाम्।

तदनु ब्रह्मादयश्चत्वारः प्रधानर्त्विजो महिषीपरिवृत्तिभ्यां सह वावातामपरां पालाकलीञ्च राज्ञे दक्षिणार्थं परिगृह्य रमणबद्धस्तेनागृह्णन्। अश्वस्य वपास्थानीयां तेजनीमादाय नियतेन्द्रियः परमेण प्रयोगचतुरिम्णा सम्पन्नः शास्त्रतः श्रपयामासाध्वर्युः। दशरथोऽपि यथाविधि पापमपनुदन्नात्मनः स जिघ्रति धूमगन्धं वपायाः। मन्त्रवन्तः षोड शर्त्विजोऽपि शेषभक्षणं यथा न भवेत्तथाग्नावश्वस्य सर्वाण्यप्यङ्गानि तान्यजुहवुः। विशिष्य वैतसो भागः श्रपयितुमवादीयत। अनेकाहसाध्यत्वेऽप्यश्वमेधस्य सवनीयाहानां गृहीत्वा प्राधान्यं त्र्यहः सङ्ख्यातः कल्पसूत्रेषु ब्राह्मणवाक्यैः, अग्निष्टोममहः प्रथमं ज्योतिष्टोमं द्वितीयं सर्वस्तोमाख्यमतिरात्रं तृतीयमिति। प्रकृतेऽश्वमेधे शास्त्रान्तरदर्शनमप्यस्त्यतो विहिता इतरे क्रतवोऽपि दशरथेनाकारिषताग्निष्टोमायुष्टामावति रात्रेऽभिजिद्विश्वजिद प्तोर्यामावित्यष्टावाहत्य।

## ॥ अध्वरपारम्यम् ॥

सर्वेषां च दृश्यश्रीविलासानां चकास्ति मूलं त्रयीलक्ष्मीः। चितः कचनात्मकं प्रत्येकप्रविभिन्नं जगज्जी वेशरूपञ्च प्रपञ्चं वेदशब्देभ्य एव हि निर्ममे परमेश्वरः। आभिश्च संहत्य नामरूपाभ्यां विचित्राभिर्ब्रह्मकोश विकाशात्मभिः प्रपञ्चलक्ष्मीभिः कर्तव्यं किमपि सुमहत्कृत्यं समस्ति। येन स्वमहिम्नि सुस्थितिमत्याः स्वरूपमसरूपं प्रकाशेततरां गौरवञ्चासाधारणं भगवत्या मातुस्त्रय्याः श्रियः। यस्मादृते चासां साफल्यमेव सुतरामसम्भवि कार्तश्यं वा। तद्धि कर्म प्रशस्ततरं कीर्त्यते क्रतुरिति। एतदेव वास्तवं स्वरूपं परमेश्वरस्य "यज्ञो वै विष्णुरि"ति हि श्रूयते। रूपमपरन्तु तत्तत्साधकबुद्धिभेदपरिकल्पितमुपासनासौकर्यार्थमथापि फलप्रदं भवति शास्त्रप्रामाण्यात्। निजसङ्कल्पमात्रादवितथाज्जनितमेतज्जगच्च पालयति स्वेन यज्ञेश्वररूपेण श्रीमानादिनारायण एव। ईश्वरांशभूतास्तद्भिन्नास्तदभिन्ना वा भवन्तु समेऽपि जीवात्मानः। उभयथापि यथाश्रुतिस्मृतिसदाचारं तैर्ज गद्रक्षणपुण्यकर्मणि भाव्यमवश्यमीश्वरसमयोगक्षेमैर्भव्यैः। जानराज्ये राजप्रायैरिव जनैः। न खल्वङ्गी भवति सकलः सत्येकस्मिन्नङ्गे विकले। नियन्तुरयमाशयः समेषामीश्वरस्य,मदाज्ञारूपे श्रुतिस्मृती अनुरोद्धव्ये इति। यः स्वसुख

मात्रोन्मुखः स्वैरमुच्छृङ्खलतया निदेशमतिक्रमते स मम लोकानाञ्च द्विषन्भवति दण्ड्यः पापात्मेति। उपनिषदुक्तः स्फुलिङ्गदृष्टान्तोऽपि जीवेश्वरयोः साधयितुमभेदं न जागर्त्यननुकूलः। नहि स्फुलिङ्गा जहत्यग्नित्वम्। क्षुद्रदेशकाल रूपोपाधिभिः खलु केवलमल्पत्वं प्रतीयते तेषाम्। न स्वभावभूताभ्यां दाहप्रकाशाभ्याम्। अतोऽशत्वेन भ्रान्ति प्रत्ययगोचरा अपि देहाद्युपाधयो जीवाः परमार्थतो नैव व्यतिरिच्यन्त ईश्वरादिति, भगवत इव जीवात्मनामपि मूर्धनि निक्षिप्त एव महान्भारो लोकक्षेमकारे कर्मणि। तस्मादवश्यकार्यमृणपरीहारवदधिकारिणा सता जीवात्मनैकैकेन लोकान्तःपातिना देशकालशक्त्यनुरोधेन भगवदुद्दिष्टं त्यागरूपं यागदानहोमादि श्रौतं, स्मार्तञ्च वापीकूप तटाकारामनिर्माणादि। सामूहिकेष्वपि कर्तव्यतयोपनिपतितेषु धर्मेषु न न्याय्यं विहितस्वधर्मानाचरणं स्वार्थेषु तु केवलं सुतराम्। न स्वार्थो धर्मः स्वधर्मः किन्तु परार्थपरतया वैधः स्वेन क्रियमाण एवाभिधीयते स्वधर्म इति। किम्बहुना भूयः कृतनैकावतारो नारायणः परमेष्ठी, शतक्रतुः जीवन्मुक्ता जनकादयः, कृतकृत्या अपि सर्व एवामी निर्वर्तयाम्बभूवुर्यज्ञादिकमित्यवगम्यते। कामं सम्मत एष यज्ञमार्गो भगवतो वासुदेवस्य समाम्नायशिखर सर्वस्वस्य प्रपञ्चैकसारस्य जगदवने जागरूकस्य संस्फुरति। आदर्शो भूत्वा स्वयं धर्मानाचरितुमुपात्तकौतुको ह्यवतरति भगवान्भारतभूम्यां क्रियासमभिहारेण। भगवद्वितीर्णमपि द्रविणं समग्रं तत्स्वरूपायैव यज्ञाय शोभते समर्प्यमाणम्॥

नान्यथा श्रीमत्त्वस्य फलं किमपीति केवलं न, प्रत्युत महाननर्थोऽपि। अतो यज्ञेश्वरप्रीणनाय क्रिय माणानां भगवदन्यूनप्रभावसनातनवेदमहापुरुषैकोपज्ञातत्वेन सर्वथा सिद्ध्यति प्रेयःश्रेयःप्रयोजनानां प्राशस्त्यम सामान्यं क्रत्वादीनाम्। किञ्च, लोककल्याणकामानां कतीनाञ्चित्पुरुषधौरेयाणां वैधादृतेऽसाधयज्ञादेर्नेतरोऽस्ति राजमार्गः। स्वबुद्धिं परिक्लेश्य विमर्शपद्धतौ कथञ्चिदपूर्वतया पथः कस्यचित्संशयितफलस्योपज्ञानमपेक्ष्य क्षुण्ण चरस्य चिरन्तनैरीश्वरानुमततया प्रशस्तस्य क्लृप्तस्य च वर्त्मन आश्रयणमेव श्रेयःप्राप्त्यै स्फुरति परमरमणीयम्। बुद्धिपथमति वर्तमानेषु धर्माधर्मेश्वरादीनां तत्त्वेषु मामूद्वृथा प्रसार्यमाणा पुरुषमतिरप्रतिष्ठितिप्रकृतिरिति श्रुति विदामभिप्रायः कृपावताम्॥

प्रणवो वेदः प्रवृत्ति र्यज्ञः पर्जन्योऽन्नं प्रजाः पुनरेताभिरुच्चार्यमाणः प्रणवो वेद इत्यादिक्रमादविच्छेदेन स्थेम्ने जगतः सर्वैरपि निर्बन्धेन परिवर्तनीयं जीवात्मभिर्भवति धर्मचक्रमिदं व्यवस्थितमीश्वरस्वरूपेण। सर्वात्मकमपि प्रतिष्ठितमत्यन्तायाभिव्यक्तिमत्तया यज्ञ एव कर्मणि ब्रह्म भवति दीप्यमानम्। यज्ञविच्छेदाद्वैफल्ये पूर्वेषां त्रयाणां, कारणविरहेण चोत्तरस्यासम्भवे त्रिकस्य, जगत्स्यादिदमुन्मथितमेवेति, यज्ञविच्छेदकस्य केवलमिन्द्रियारामतया पशु प्रायस्य जीवनमेव पापात्मनः सकललोकनिरवधिकानर्थहेतुरिति, तस्य मरणमेव स्पृहणीयं सर्वैरिति भूयस्तरां जागर्ति निन्दापि। जन्मनि कस्याप्यभावे विशेषस्याध्यक्षमनुभूयमानमेतज्जगद्वैचित्र्यं नाकस्मादर्हति समुत्पत्तुम्। शिबिकां ह्यध्यासीनः कश्चिदुह्यते सुसुखं, केचन वहन्ति निपतत्फालपृषत्कम्।

अत्र किं वा स्यादन्यन्निदानमन्तरेण धर्माधर्मौ। ईश्वरस्तु तत्तत्प्राणभृत्कर्मानुसारेण केवलं विलसन्दायकः फलानां, पलायते सुदूरं वैषम्यनैर्घृण्यप्रसङ्गभीत्या भर्तुं शिरसा प्रपञ्चवैचित्र्यहेतुभावोपगमरूपं भारं गुरुतरम्।

भारतीया हि वयं दद्मोऽत्र क्रतुभुग्भ्यो हविरध्वरे। सुरपतिरसौ हर्षितो वर्षतीत्ययमनश्वरोऽभिसम्बन्धस्सुरुचिरश्चा श्रुतपूर्वो देशान्तरेषु। तत्तत्साध्वसाधुकर्मफलानामवश्यभवितव्यतैव कीर्त्यते नियतिरिति। अपरिहार्यतया बलवती त्वादेवैतस्या सुखदुःखात्मकसंसारानुभवक्लेशो महात्मनामपि नलरामयुधिष्ठिरप्रभृतीनामस्ति पुराणेतिहासप्रसिद्धः। तादृशञ्च निरङ्कुशमपारतन्त्र्यं प्रकृत्या नियतेर्वितरीतुं हीश्वरादपरः कोऽपि नेश्वरः। इदमेव भगवत ईश्वरत्वं, यज्जगत उत्पत्तिस्थितिविलयेषु वितीर्य स्वतन्त्रतां, पुष्करपलाशवदलेपलेशेन केवलं महिमन्यात्मनो नित्यंप्रतिष्ठितत्वम्। स्वसन्निधानमात्रादयस्कान्ताश्मवल्लोकक्रुते प्रवर्तको हि स भवति भगवत्याः प्रकृत्या अपि। विहाय कर्तृत्वाभिमानं फलाभिसन्धानञ्च "सर्वस्वामिनोऽहमीश्वरस्य भृत्यः परं, तदीयञ्च सर्वं जगद्भद्रङ्करं कर्म यज्ञादिकं तदाज्ञया मया निर्वर्त्यं केवलमुपकरणप्रायेणे"ति निर्णयेन मनःसमाधानवितरणप्रवणेनानुष्ठीयमानन्तु नित्यं नैमित्तिकं काम्यं वान्यद्वा लौकिकं स्वार्थं परार्थञ्च समस्तमप्येतत्पापरूपचित्तविक्षेपप्रतिक्षेपेण किमपि विदधद्धृदयनैर्मल्यं भगवद्भक्तियोगाय तद्द्वारा मोक्षमहासाम्राज्योपयोगिने च ज्ञानाय नियतमवकल्पते, यद्भवति जन्मभाजामेकं लक्ष्यं सर्वसंसारोपरमरूपं परमः पुरुषार्थः। संसारसमूलोन्मूलनफलकमेव संसृतेः कलनमपि। नेदमृते वेदादुप ज्ञातुं कोऽपि प्रभवति कल्पकोटिसहस्रैरपि मेधाविनम्मन्यः पुरुषस्तत्समुदयो वा। एतादृशस्य च ज्ञानिनो भगवदात्मनो योगक्षेमादि सर्वं, स्वीयमेवेति कृत्वा निर्वहत्यक्षतं पुण्डरीकाक्ष एवेति सकलाभ्युदयलाभोऽपि सिद्ध्यत्यानुषङ्गिकः सम्यगिति, हन्त! माहात्म्यमवाङ्मनसविषयो यज्ञादीनाम्।

प्रेयः श्रेयसोरवाप्त्यै निरुपममभ्युपायमेनमनेनसं सम्प्रदायविदः प्रकाशयितुमेव त्रयीमार्गमनपायमनल्पफलतया कामधेनूयमानं मानातीतविभवं प्रावर्तिषत महर्षयः स्मर्तारः समस्ता अपि परावरज्ञा इत्यहो! भाग्यं भारते लब्धजन्मनाम्। निरतिशया च स्वसुखविमुखता महात्मनाम्।

अध्वर इति नामैव कर्मणो वैधस्याहिंसाप्राधान्यमभिव्यनक्ति। अत एवानाहूतैरपि नियतमभिगम्यते सोपहारम्। अतः पवित्रतरेऽत्र कृत्ये पशुहिंसायाश्चोदिताया हिंसात्वमेव भवति दूरापास्तम्। कुतः पुनरवकाशः किल्बिषसम्भावनायाः। यज्ञार्थमेव ह्यसर्जिषत पशवः परमेष्ठिना। प्रत्यहमुदरम्भरयो भवन्ति ह्यसुराचाराः श्मशानीकर्तुमहीणा अकरुणा निजोदराणि पशूनां तपस्विनाञ्चासंख्यानाम्। को वैतान्प्रष्टुमीष्टे। जगद्भूतये विहितमपि कादाचित्कं यज्ञाचरणं निरुन्धन्ति हन्त! पापाः कतिपये समुपन्यस्यन्ति च सर्वज्ञंमन्या अहिंसा परमो धर्म इति, पण्याङ्गना इव पतिव्रताया धर्मम्। कति वा भैषज्याय पशुपक्ष्यादयः संह्रियन्ते प्रत्यहं योद्धृभ्यश्च। यद्येतादृशैः क्रूरकर्मभिर्लोकहितमेव फलमास्थीयते हन्त! किमपराद्धं मातृसहस्रादपि हितैषिण्या विहितेन भगवत्या त्रय्या कर्मणा पवित्रपवित्रेण। अतः क्रतौ हिंसैवाहिंसा भवतीत्यास्थातुं युक्तम्। यदि तु व्यथायास्तदनुमापकचेष्टायाः प्रत्यक्षत्वेन सत्त्वमिति, पशुविशसनात्मनोऽङ्गस्य प्रायश्चित्तविधानमिति च कृत्वा, हिंसात्वमेवेत्याग्रहस्तर्हि हिंसया तया पापमेव नेत्युपेयम्। प्रायश्चित्तविधानं च पापसम्भावनामात्राभिप्रायेण मनसः शान्तये परम्। ईश्वरवद लौकिके हि पुण्यपापे नास्माकं पुरतश्चरत आवां स्वः पश्यतेति। किन्तु स्तः शास्त्रैकसमधिगम्यस्वरूपे। तत्र जीवात्मनां नैव निविशेत सुसूक्ष्मापि बुद्ध्याः शक्तिः। निविशमाना च स्वरूपनाशमयेत कठिनतरप्रस्तरे प्रयुक्त निशितक्षुरप्रधारेव।

अस्तु वा वस्तुतः पापमपि। सफलञ्च प्रायश्चित्तं, तथाप्यननुष्ठेयत्वे न कापि युक्तिर्नीतिमती। यतः शताधिकेषु परमाभ्युदयसाधकेष्वङ्गेषु तदन्तःपातिनोऽङ्गस्यैकस्य काममस्तु स्तोकपापानुभावकत्वञ्चन्द्रमसि मालिन्यमिव सहृदयानां, श्रोत्रियाग्रेसराणां क्षेमकृत्ये व्याप्रियमाणानामगणनीय एव स दोषो भविष्यति। पशुविशसनायत्तः पापः स्वल्पो भूयान्वा परमस्माकं, क्षेमन्तु महल्लोकस्येति निर्विशङ्कं शास्त्रशिरसि भारं निधाय प्रवर्तमानाः कृपावन्तः किन्न भवन्ति त्यागिनः। किं वा न परिगण्यन्त उपकारका इति भिषग्वराः शस्त्रचिकित्सायां कृतपदाः। किं बहुना रक्तबिन्दोरेकस्यापि विना निपातेन देवताद्वारकं लोकक्षेमसम्पादनमसम्भवीति ननु सर्वस्मिन्नपि देशे सतां भवति विश्वासः। जीवानां समवायस्तु न तत्रास्ति शक्तिमानित्यतः कर्तव्यमनाक्षेपं क्रत्वादि। ऋते च निष्कामकर्मण ईश्वराराधनं नास्ति किमपि। यावदवगम्यते ब्राह्मणयज्ञस्य गौरवं, तावदेव क्षत्रियादेर्विहितत्वेन स्वधर्मभूतस्य युद्धादेरपीति नोच्चावचभावः कोऽपि समुन्मिषति चतुर्षु वर्णेषु तेषां धर्मेषु वा स्वप्नेऽपि। स्वस्वकर्मण्यभिरत ईश्वराराधनरूपे सिद्धिं हि विन्दते मानवः सर्वोऽपि। न केवलं त्रैवर्णिकानां विधीयते यागादि, किन्तु यथानिमित्तमपूर्वविद्यामपि कल्पयित्वा निषादरथकारादीनामपि हि परमोदारप्रकृत्या श्रुत्या जनयित्र्येति न कोऽपि पक्षपातोऽत्र लभतेऽवकाशमीषदपि। हिंस्यमानतया प्रतीयमानः पशुरपि लोकमवाप्नोति पुण्यमिति श्रुतितः सिद्ध्यति। वेदविरुद्धं मतमनेकञ्च जनिमदपि भारतोर्व्यां कथं कथाशेषतामनायीति विभाव्य श्रुतेर्बलीयसीत्वमवसेयं भवति सुधीभिः। केवलपुरुषबुद्धिरतीतेषु तत्त्वेषु कुण्ठीभावमयमानापि शास्त्राचार्योपदेशरूपसंस्कारपरमा तु निविशेतापीति श्रौतं मतम्।

निदिष्टयोर्निर्दिष्टतत्तत्फलोत्पत्त्यानुकूल्यसमाकलनात्मनोर्दृष्टादृष्टयोः सहकारेण संस्कारयोर्लोकस्य कुशलमनाविलमखिलस्य विधातुं प्रभवतस्तरां द्रव्यं देवता च। ये उभे शरीरं यज्ञस्य।

[1]अजस्रं हि जाग्रद्यजमानैः श्रुतिमधुरस्वरैरुद्गातृसहकृतैरुदग्रोत्साहैः शुचिभिरुज्ज्वलवेषैरुपकरणरमणीयैः शास्त्रकुशलैः सत्त्वोद्रेकसमर्थैर्ज्ञानवीरैरसकृद्ब्रह्मनिरीक्षणेन सम्यगनुगृहीतैरभ्यस्तेतिकर्तव्यताजातैरजातनिर्वेदैरप्रमाद्यद्भिः ऋत्विङ्मुखैः पवित्रपात्रैः प्रयोगप्राशुभावेन परमाश्चर्येण प्रतिक्षणमभिनवभावमिवापाद्यमानं, कमप्यद्भुतरसास्वादमुपजनयदभिनीयमानं सत्सदस्यानां देदीप्यतेऽत्यन्तं श्लिष्टमक्लिष्टमिष्टं शिष्टानां वेदमहापुरुषानुशिष्टं किमपि महानाटकं हाटकलक्ष्मीविलासैर्जुष्टञ्च दाक्षिण्यसम्पन्नैः॥

# ॥ दक्षिणादानं पुत्रीयेष्टिश्च ॥

तदनु मेदिनीनाथः प्रधानतया प्राप्तावसरे च दक्षिणावितरणे, स्वयं स्वयम्भुवाचरितचरमादर्शयितुकाम इवाश्वमेधं, प्राचीं होत्रे प्रतीचीमध्वर्यवे ब्रह्मणे दक्षिणामुदीचीमुद्गात्रे च विश्राणयामास प्रीणितान्तःकरणः "प्रतिदिशं दक्षिणां ददाति प्राचीदिग्घोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुरि"रिति सूत्रोक्तप्रकारेण।

---

1. अजस्रमित्यारभ्य सम्पन्नैरित्यन्तं प्रतिपदं क्रतोर्नाटकस्य च श्लेषः प्रतिपाद्यते।

"महापृथिवी न देये"ति सत्यपि निषेधे, षोडशिग्रहणवत्केसरिदानवच्च विकल्पमाकलयमानस्तत्रापि भावानुष्ठानस्यौचित्यञ्च चक्रवर्तीत्थं वितताार दिशश्चतस्रोऽपि। स्वसर्वस्वमप्यर्थिसात्कर्तुं प्रवृद्धकुतूहलं हि कुलमिक्ष्वाकूणामवस्थायां सर्वस्यामपि। किमु वक्तव्यमुचितदेशकालपात्राणामुपनिपाते विशेषतश्च वैधे। विध्युपोद्बलितो हि त्यागः समर्थः समपुमर्थवितरणे गीर्वाणद्रुमायमाणः। अतः कृतकृत्यतामात्मनः प्राप्तोऽपि, पुनस्तीव्रतरवितितीर्षया सन्धुक्षितः प्रारभत पृथिवीमृत्विग्भ्यः प्रदातुम्। सन्दर्भलाभे हि कृतसुकृतसार्थाः स्पृहयन्ति काममात्यन्तिकत्यागायैव महान्तः। यावन्मवत्यानन्दो वितरणिनां, न तावत्प्रतिग्रहीतॄणाम्। त्यागरसास्वादसमुत्पन्नं हि सौहित्यं प्राक्तनसुकृतपरीपाकैकायत्तमर्हति सेद्धुम्। अर्जनसमवनव्ययेषु च सर्वदा निरवधिकक्लेशकरस्यानर्थसार्थस्येव मूर्तिमतोऽर्थस्य विनश्यदवस्थस्य पूततरकृत्वादिषु विना विनियोगेन स्वस्यान्येषाञ्च कुशलकरः कोऽपि न सुपन्थाः। स्वार्थमात्रपरं नरमपेक्ष्य द्वीपिप्रायं, किन्न प्रशस्तानि स्युस्त्यागमात्रप्रकृतीनि प्रतिफलानाकाङ्क्षीणि च तरुवीरुद्गुल्मप्रभृतीनि। अनल इव तूलमुन्मूल्य समूलं किल्बिषं नैर्मल्यमन्तःकरणस्य विधातुं प्रभवत्सु खलु कर्मसु त्याग एव प्रशस्तो धर्मः। यागदानहोमा अपि त्यागरूपा एव। अहिंसा परमो धर्म इत्यत्र च हिंसापदेन न परहिंसैव मनोवाक्कायजन्या ग्राह्या, किन्तु स्वात्मीयापि। सन्ततचिन्तालक्षणो रागद्वेषमयविक्षेपात्मा च पाप्मा भवति महती हिंसा। सेयमायुःक्षपणे परमदक्षा कापि महायक्षी। अस्याश्च जनयिता कः परोऽस्त्यर्थात्। अतो न परं शास्त्रदृष्ट्या, किन्तु सूक्ष्मेक्षिकयापि क्रियमाणे विमर्शे सर्वात्मना श्रेयस्कामानां हातव्य एवार्थः क्रूरतरो गरलादपि तीव्रादिति कुतो न बिभीयात्। प्राक्तनकर्मानुरूपं वितीर्य वित्तं लोकायोपचिकीर्षति भगवान्द्वारीकृत्य मर्त्यं वारिवाहमिव वारिराशिः। द्रव्यस्वाम्यमपि न द्वारभूतस्य। तदाज्ञाभूतश्रुतिस्मृत्युक्तवर्त्मन्येव विनियोक्तुमदाय्यधीकारोऽपि। अनुरोधे श्रेयः, प्रत्यवायश्च विपरीते। यथानियोगमविनियोगादप्युत्पादयेदनर्थबाहुल्यं दुर्विनियोगः।

महदभिव्यक्तिस्थानञ्च परमात्मनो हृदयाकाशः। तत्र हि स्वल्पोऽपि न देयोऽवकाशो मालिन्यस्य। मलिनिमैव हि विक्षेपश्चित्तस्य रागद्वेषादिलक्षणः। पापं पापफलं वायं भवतु, सत्यस्मिन्दुःष्ठु भवति खमिति दुःखशब्दार्थो व्युत्पाद्यमानो वित्तैकजन्यः। एतद्विपरीतं च सुखं शास्त्रीयकाम्यकर्माचरणादपि नैव सिद्ध्यति, कुतः पुनरतितरामवरेभ्यः कर्मभ्यो लौकिकेभ्य इति, वित्तात्खपुष्पायमाणमेव सुखमिति सैषा मनीषा विदुषाम्।

अथ विगतकल्मषमवादिषुः ऋत्विजो महाराजम् वसुमतीमिमामेक एव कृत्स्नां त्रातुमर्हति भवान् न तया कार्यमस्माकं न शक्नुमश्च पालने, यतो विहिते स्वाध्यायाध्ययने सदा भवामो व्यापृताः, मणिश्रेष्ठं सुवर्णं गावो वा यत्प्रतिनिधि स्यात्तदेव प्रयच्छेति। वितताार श्रुतीनां पारदृश्वभ्यो दशरथस्तेभ्यो दशशतसहस्राणि पयस्विनीनां दशकोटीर्हाटकस्य "तस्माद्धिरजतमदक्षिण्यमि"ति श्रुत्या प्रतिषेधो दक्षिणाविषयः प्रतिनिधितया प्रवितरणे तु न प्रसरतीति विनिर्णयंश्चतुर्दशकोटीश्च राजतां रजतानाम्। ततस्त्वृत्विजः सर्वे दक्षिणाप्राप्तमंशीकृत्य वित्तं "यावदध्वर्यवे ददाति तदर्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे एतेनेतरेषां दानं भवती"त्युक्तक्रमादृश्यशृङ्गाय वसिष्ठाय च प्रददुः। अनुपदमृश्यशृङ्गवसिष्ठमुखेन कृत्वा प्रविभागं न्याय्यं, सर्वे वयं सः सुप्रीता इति प्रत्यवोचन्त। "यावन्तो वै सदस्याः सर्वे दक्षिण्या" इत्यनुसृत्य श्रुतिं, यज्ञसन्दर्शनार्थमुपागतेभ्यः कोटिसङ्ख्यं जम्बूनदीप्रभवतया परमभास्वरं कार्तस्वरञ्च प्रादित प्रमोदितचेताः। सर्वदक्षिणादानावसाने च कस्मैचन याचमाना

याकिञ्चनाय दातव्यवस्त्वन्तरराहित्येन त्यागिनां रत्नाभरणायमानः प्रादादात्मन एव हस्ताभरणं सकरुणम् । प्रीणितेषु च धरणिगीर्वाणेषु हर्षपर्याकुलेक्षणः प्रणनाम तेभ्यः सभक्त्यतिशयम् । ब्राह्मणैर्विधिवदुदीरिता अवन्ध्याः प्रह्वो गृह्णन्नाशिषः कामं प्रमुमुदे । अदीपि च तत्क्षणं पुत्रोत्पत्तेः स्वर्गस्य च प्रापकमपरपार्थिवर्षभसु दुष्करं निर्वर्त्य निष्प्रत्यूहमुर्वीपतिर्हयमेधमेधमानः कयापि श्रिया वाङ्मनसाविषयेण । इत्थमपत्योत्पत्तिपरिपान्थिपापा पनोदपटुतमं नायकञ्च स्वर्लोकस्य परिसमाप्य भगवदङ्गदेवताराधनभूतमश्वमेधं साक्षात्परमेश्वरसमाराधनात्मतया प्रधानं पुत्रप्राप्त्या हेतुं क्रतुं मनसि दधानः सुमन्त्रोक्तमृश्यश्रृङ्गं स प्रार्थयते भवानर्हति कर्तुमिति । ऋषिरसावप्यो मित्यभ्युपयन्भविष्यन्ति पुत्राश्चत्वारस्ते राजन्निति प्रणतं मधुरमधुरव्याहारेण प्रहर्षयन्नथर्वनिधिः किं कर्म कर्तुमत्रो चितमिति क्षणमात्रं चिन्तयन्पुत्रेष्टिं साधनत्वेन निश्चिन्वन्नथर्वशिरसि प्रोक्तैर्मन्त्रैः करिष्यामीति सङ्गिरमाणः शास्त्र दृष्टक्रमेण कृतवानेकामाहुतिम् ॥

—:*:—

## ॥ ब्रह्मनिकटे देवानां रावणोपद्रवप्रकटनम् ॥

तस्मिंश्च हयमेधे मन्त्रैर्विधिवदाहूताः पुरुहूतमुखा बर्हिर्मुखाः सर्वेऽपि सन्न्यदधत पुरस्कृत्य विधातारं स्वस्वहविर्भागानाहर्तुकामाः । अन्तर्धानशक्तिप्रभावात्समवेत्यान्यानवलोकं, स्वामिनं सञ्जगरिरे भगवन्तं लोकपिता महम् । भगवन्भवत्प्रसादेन हि वरवितरणरूपेण दृप्तो नितान्तमन्तकस्यापि भवन्नन्तको यातुपतिर्बाधतेतरा मस्मांस्तपस्विनः पौलस्त्योऽपि सन्नावणो लोकरावणः, कुलोन्मूलनकर इव कुठारः कठोरः । यद्यपि तपश्चरता मधिकारोऽस्ति वितरीतुं वरं परमस्य भवतस्तथापि दुष्प्रयुक्त एवैष इत्यस्माकं मनीषा । यतो भवानदित वरं परं प्रमुदितस्तस्मायनार्याय फलानुभवस्तु भवत्यस्माकं दुरन्तो निरपराधानामिति किन्न जानीते सर्वज्ञः । किन्तु भावत्कमेतत्कृत्यं नाभिव्यनक्त्यसमीक्ष्यकारिताम् । यद्भवानपि व्यथते काममममर्यादेन दुरात्मनस्तस्य विचेष्टितेन । प्रकृत्यैव हि स पापात्मा किमु वक्तव्यमुपरिवरेणालमुपोद्बलनेन । दत्ताधिकारो हि वृश्चिको दशति नक्तन्दिवम् । अनर्थः खलु सुललितः कर्तुं, प्रतीकारस्तु भवति सुदुष्करः । विजानन्नपि निरवधिकमुपद्रवं निवृत्त्युपायमनुत्पश्य न्कमपि परब्रह्मवदुदास्तेतरां भवान्केनाभिसन्धिनेति सुनिपुणं विमृशन्तोऽपि नान्तमधिगच्छामः । क यामः कस्य वा पुरतो रुदिमः, कमपरं वा वृणीमहे शरणम् । अध्यक्षमेव कथयितुमनर्थजातं जातैकमत्या व्याजीकृत्येमं वाजिमेधं वयं स्मः समवेताः । प्रभो ! भृशमर्दितं हि नश्वेतश्चोदयतीत्थं व्याहर्तुं, मा मंस्त भवानियमवधीरणेति । भक्तावतंसा वयमृते भवतः कस्य सकाशात्कुशलं लभेमहि । अवधत्तां भवानाकर्णने तथाहि—

हन्त ! दुर्भागधेया वयमभवाम* एव ध्रुवम् । यदमृतान्धसोऽप्यनन्धसः सुमनसोऽपि दुर्मनसो दिवौक सोऽप्यनोकसः कारिताः क्लिश्यामहे ।

---

* नञो नलोपस्तिङि क्षेपे ।

मुनिहृदयमिव विषयाभिलाषैर्विषैः, ब्रह्मचर्यमिव स्त्रैणविहरणप्रसङ्गैः, चातुर्वर्ण्यमिवोदरपूरणाय परं पराकृतैः स्वधर्मैः, प्रजाक्षेममिव परार्थपराङ्मुखैः पार्थिवव्यापारैः, जनतास्वातन्त्र्यमिव सर्वाधिकारिणां स्वेच्छाधिकारैः पैतृकस्वमिव निरवधिकैः प्रमादैः, नूत्नवित्तमिव दुश्चरितैर्हृदयोद्वेगकरैः, धर्मस्वस्वाम्यमिव विचक्षणानामधिक्षेपैः पौरुषमिव योषितां प्रभुत्वमादधद्भिर्व्यवहारैः, गौरवमिव नैयून्यज्ञानादनुपश्लिष्यद्भिः[1] शिष्यगणैः, सम्यमिमहत्त्वमिव दुराशावेशैः, प्रज्ञाचक्षुरिव दुर्धनमदान्धसविधे विविधैरुपसर्पैरपत्रपैः, विपश्चिज्ज्ञानदीपमिव[2] नैकमुखैर्दुर्गतिक्रूरतर चक्रवात्याक्रमाभिव्याघातैः, कविहृदयमिव चलदलदलायमानैर्मानसवृत्तिसन्तानैः, विमलमिवयश उच्छृङ्खलखलकलि तालीकापवादैः, वैराग्यमिव दुस्सङ्गोद्भवभोगाभ्यासैः, वैदुष्यमिव परदोषाविष्कारैः, सौजन्यमिव खलश्रीविलासैः, रहस्यमिव योषितां प्रकटनपटुभिरुक्तिचतुरिमभिः, मधुरस्वरवाणीविहरणमिव नियतमनभ्युदयदायिभिररसिकानाम नादरभरैः, सुन्दरशरीरमिवोन्मत्तालर्कक्रूरतरविषविसर्पैः, आत्मतत्त्वमिव दुरन्तस्वान्तचिन्तावितानैः, भैषज्यफलमिवा पथ्यपथोद्रिक्तस्पृहैरभ्यवहारैः, सुकृताचरणमिव प्रख्यापनार्थं विहितैर्बृहदाडम्बरैः, धर्मजातमिव विनानुष्ठानेन वाङ्मात्रेण सदसि समुपन्यासैः, सौहार्दमिवासकृदाचरितैश्चिरस्य विप्रवासैः, वाग्मित्वमिव हाटकैकदृष्टिदुष्टवाचाटानां पटाटोपैः रूपकमिवानभिरूपाणां पात्राणामभिनयैः, विद्यामहाधनमिव निधनापादकैः निरवधिकसमादरवितरणपुरः सरमुपबृंह्यमाणैः केवलं कलाकलापैः, शास्त्रज्ञानमिवासकृदनुपचीयमानैः परिचयैः, शासकनीतिपरिपालनमिव तत्तज्जाति मतभेदपक्षपाताधीनैः कार्यनिर्वाहैः, अर्भकहृदयमिव भूतप्रेतपिशाचयक्षरक्षःकथाप्रस्तावैः, लोकेश ! भो भगवन् समूलं बलादुदमाथि खलु नः स्वास्थ्यं समस्तानामादित्यानां साम्प्रतं, परिपन्थिनः परिवारैरक्रमविक्रमैः त्रैलोक्यैक भयङ्करस्य बन्धुरस्य दुरात्मनां दशकन्धरस्य ।

आकस्मिकस्येव महोत्पातस्य कस्यापि वपुष्मतः पिशिताशपतेः समेऽपि मूर्धानोऽत्यूर्ध्वा भ्रुकुटिभयङ्करा स्तप्तायःपिण्डचण्डचक्षुर्गोलकाः क्रोधविस्फुरिताधरोष्ठपुटाः साटोपं करावमृष्टकरालश्मश्रव ऐकमत्येन दुर्वासनानां यौगपद्यस्यासम्भ[3]वेऽप्यसंलक्ष्यक्रमतया समसमयमिव स्फोरितान्दशविधान्विदधते स्वैरमादेशान्निर्दयमर्दनैकरसिका नुद्दिश्य किङ्कराल्लोकानामभद्रङ्करान्—कान्दिशीकयतामन्दक्रन्दं सङ्क्रन्दनं, प्रशमयत हुताशमिममितशं, गभीर श्वभ्रे निरनुकम्पं निपातयत पितृपतिं, नैर्ऋतमेतमनृतयत, वरुणमरुणयत द्रुतं तद्रुधिरैः, मरुतमरुतं कुरुत यावदा शान्तरं कुबेरं [4]वेरपृक्तस्य फलमवापयत, विरूपाक्षमचाक्षुष[5]यत, वनमुन्मूल्य नन्दनं मुष्णीत चिन्तामणिमुखानि रत्नानि साकं कामपयस्विन्या, हरत प्रसभमभ्रमूणां सुभ्रुवः स्फुरददभ्रविभ्रमा इति ॥

अपि च पिशाचावेशमाविश्य निशाचरेश्वरः पुरमकस्मादसाकमुर्वशीमुखाः स्वर्वेश्याः स्ववश्या विधाय विविधोपायैरामिरितराभिश्च प्रसभमपहृतचरीभिः कातराक्षीभिरक्षीणमणिगणकिरणाङ्कुरप्रकरप्रसरणपरिसुन्दरे शुभ्र सुधेऽभ्रंलिहसौधे कोमलमरालमहिलामृदुळतूलिकोपकल्पितानल्पतल्पैरलमाकल्पिते, पृथुतरकार्तस्वरपात्रकृत्रिमाल

1. नह्यशब्दज्ञमुपश्लिष्यन्ति माणवका इति कैयटः ।
2. घञजपाः पुंसीति तु प्रायोवादः ।
3. ज्ञानानामयौगपद्यनियमात् ।
4. अपृक्त एकाल्प्रत्ययः एतस्य फलन्तु सद्यो लोप एव ।
5. अक्रमासहिष्णुतया कुप्येदिति मिया ।

चालपरिवर्धितमल्लीमतल्लिकोत्फुल्लसुमभरपरिमळपरिभ्रमद्रोलम्बनिकुरुम्बमधुरझङ्कारमुखरिते, स्वामिनः प्रीणनकर्मणि व्याप्रियमाणेनेव बहिर्लक्ष्यमाणेन वस्तुतस्तमपि ह्रेपयता तदीयसुभगाङ्गनाङ्गदृढतरपरिष्वङ्गविशेषैरुदूढकौतूहलेन सलीलमाखेलतानिलेन मलयनिलयेनातिवेलमुल्लासिते, न केवलं फुल्लानीमानि सन्निधौ मे परन्तु विजयीन्यपि खलु लक्ष्यन्ते सौभाग्यलक्ष्म्या भूम्नेति समुन्मिषदीर्ष्ये सुवदनावदनारविन्देषु, भवतु मानमाश्वासां प्रस्थापयामीति सुधादीधिताव सिन्धुदयमाने दयमाने च सद्यो मानवतीजने, समग्रामपि रजनीं नीत्वा निर्भरमनसिजमहोत्सव भरपरमरसास्वादसौहित्यमहितां परामेत्य च श्रान्तिं सौदामिनीमिरिव महानीलनीरदे प्रातरप्यप्रबुध्यमाने मानेन विहीने दशकन्धरेऽधिवहिर्द्वारचरमसोपानं प्रतीक्षमाणोऽयं नः सहस्राक्षः परमानुग्रहेण विंशतिप्रकारनिरीक्षणानां सफलयितुमात्मनःसौखशायनिकतां, प्राप्येतापि कदाचित्सन्दर्भमपरदुर्लभमपि जन्मसहस्रैः ॥

अयं खलु सखास्माकमनलः काममनलसः, लालसोऽपि भृशं, किमप्युपकर्तुमलं न भवतीति कथमभिदधीमहि महितस्य पुरस्ताद्भवतो पाकशासनमुखाः परीपाकं नः पापानाम् । यदग्न्याहितैराहितश्रद्धैः सावधानं सुसमिद्धेऽस्मिन्हव्यवाहे यथाविधि सायम्प्रातर्हवींषि स्वाहाकारेण हव्यनामानि, स्वधाकारेण च कव्याभिधानानि मन्त्रैरहूयन्त कालमेतावन्तम् । अनेन हि वयमनेनसः साकमाभिः पितृदेवताभिर्विविधामन्त्रसमृद्धि*मृतीयमाना नित्यं व्यभाम व्योमचारिणः सुप्रीतान्तःकरणाः । प्रत्यकुर्महि च महितस्य समस्तेष्वपि देशेषु भारतवर्षस्य हर्षप्रकर्षाद्वर्षं पुष्पवर्षमिव त्रिः प्रवर्तयन्तः प्रतिमासं, सर्वविधदिव्यौषधिप्रशस्यसस्यप्रभृतिसम्पत्समृद्धये प्राणभृतां परिप्रीणनार्थमनृणिनो वयं घृणिनश्च भारतीया इव । अधुनात्वत्र कृत्ये पवित्रे चिरप्रवृत्ते च पारस्परिके मृत्प्रक्षेपः कृतो निराक्षेपम् । वयमपि क्षुधार्ताः, मध्यमलोकोऽपि बृहता पराहतो दुर्भिक्षयोगेन । यतोऽयमनिलसखः खलेन पौलस्त्येन स्वकनिकेतने स्वैरमध्यक्रियत भृतकक्रीत इवाकृतसुकृतः पाकप्रक्रियायां विक्रियां कामपि त्रासादप्रकाशयन् । आप्रत्यूषमाच यामवतीमुषर्बुधेनानेन भाव्यमात्मकृत्येषु निकामञ्जागरूकेण । ससुहृद्बान्धवस्य तस्य रक्षसः प्रतिवेलं नैकरसास्वादशीलानां द्राघीयसामसिवल्लीनामिव सन्त्रासिकानां जिह्वानां दशानां जिह्विकानां परिप्रीणनकृतेऽवश्यभाव्यश्च वैविध्यमुपपन्नैः प्रत्येकं, भक्ष्यभोज्यलेह्यचोष्यैरशेषैरपि ध्रुवं स्वादिष्ठैर्द्रढिष्ठैश्च श्रेष्ठैः । ईषन्नैयून्ये ह्रेपयेयुरेता रसना अपकृपं प्रयुज्य वाङ्मयाञ्छ्रुतिपुटद्वारान्तःप्रविश्य मर्मस्फोटकान्कपटात्मनो नाराचानाचारस्य चक्रवर्तिनः क्षपाचरणाम् । कथञ्चिदपि सहकर्तुमविजानतीषु च राक्षसवनितासु निरुह्य कृत्यभरमात्मीयं परिश्रान्त्या च भूयस्या कुत्रचित्कोणेऽनाशिततया स्वयङ्ग्रहाश्लेषसुखं देव्या निद्राया अनुभवन्तमिव लक्ष्यमाणं, स्वस्यास्वप्नत्वकामं विनिन्दन्तञ्च मुग्धं, मुग्धमुपसृप्य दययाविष्टा सती राक्षसराजसुन्दरी मन्दोदरी रहसि क्षुदुपहतये यच्चद्वितरति तदपि हविर्भागवितरणाभ्यासवशान्मन्दरगिरिकन्दरोदरेषु कातर्याल्लीयमानेभ्योऽस्मभ्यमहो ! प्रविभज्य दत्वा शिष्टं भुञ्जानो नयति स्वमनेहसमुदारस्वभावो विभावसुः । अनिवेद्यैव राक्षसराजायाद्य सङ्गच्छमानोऽस्य निच्छन्नप्यस्माभिर्भृशं निर्बन्धितः ।

अपि नामास्य देवानां नः श्रोत्रियस्य स्वतः पवित्रस्य पावयितुश्च समस्तानां पत्युर्देव्यास्तपस्विन्याः श्रीस्वाहाया युक्तमीदृशं दुरवस्थानम् ॥

---

* ऋतिः सौत्रो धातुः गत्यर्थः ।

चण्डकरात्मजतया पूज्योऽयं दण्डधरः सर्वसंहारकर्तुः प्रतिनिधिरिव परमेश्वरस्य धाम्ना निस्सीम्ना भासमानः पितॄणां यजमानतया विराजमानः नाम्ना च यथार्थेन धर्मराजः जाज्वल्यमानश्च समाम्नायशिखररम्यहर्म्यसमुत्तुङ्गशृङ्गैक रत्नप्रदीपः प्रतीपः परं पापात्मनां ज्ञानाचार्यतया नचिकेतःप्रभृतीनां नीतः कठोपनिषन्नाटकप्रधानपात्रतां निरतिशयज्ञानवैराग्याभ्यामसदप्यभ्यर्हितः स्वोपासकानां सद्मसु यथेष्टमष्टलक्ष्मीः पण्डितस्ताण्डवयितुं, प्रातः स्मृत्या दूरीकृत्य दुरितानि समीहितानां प्रदानेऽधिगतः स्वातन्त्र्यं किमप्यद्भुतमपरदुरवापं सुकृतस्तोम इव कोऽपि दीप्यमानः प्राणभृतां वपुष्मान्, आधिकारिकतया कृत्ये प्रतीयमानोऽपि क्रूरतया विवेकविकलानां, परमार्थतः परमकृपाकूपारः, श्रितवतां त्रिविष्टपपादपायमानतां स्वस्य सत्यापयन्नवस्थितः सावित्र्याश्चरित्रेण, कथमपि नीतिपथा दप्रच्युतः साम्यामवस्थां तुलादण्डवदाहिण्डमानः शासकश्च दुरात्मनां पालकश्च सदातनधर्ममार्गानुगामिनां, परमेष्ठिन्! कीदृशमनुभवति दौरवस्थ्यमिति न पारयामो वयं विवरीतुम्।

यद्ययमुच्चछेदिच्छया चक्रिचक्रसप्रभावमात्मनः कालदण्डमतिमात्रमुद्दण्डं नामावशेषतां नीतो भवेन्नियतं नेता यातुनां कलङ्कैकनिलयोऽसौ लङ्कानायकः, परन्तु भवद्वितीर्णवरस्य मा प्रसाङ्क्षीदगौरवं किमपीति केवलं कलयन्नास्ते तूष्णीम्।

तदजानानोऽसौ दशाननः शमनमप्येनं यथेष्टमादेष्टुं हन्त! हतको न भवति पृष्ठतः। यतस्तदाज्ञया, नियन्त्र्यमाणतामभिनयन्भवदर्थे, साकं किङ्करैरसाधुभयङ्करैरेकैकस्यामपि निशीथिन्यां लङ्कां परितःपुरीं परिबम्भ्रम्यते परिरक्षणार्थं, परीक्षाकालोऽयं सर्वात्मनास्मादृशामन्तर्यामिना विहित इति मनागप्यविकुर्वाण आत्मवतामनुत्तमः। जीवन्मुक्तोऽयं यावदधिकारं पदं यथातथावापि वर्तमानः प्रभवति निर्वोढुं, वयन्तु क्लिश्नीमः पश्यन्तस्तदवस्थाम्। किञ्चायमत्युच्छृङ्खलखलालापानुसारेण रौरविणः स्वर्गिणश्च प्रतिक्षणं व्यत्यस्तयत्यस्तङ्गमितमहिमेव स्वात्मानं लक्षयमाणः। एतदर्थमपिवायमवश्यमनुकम्पनीयो महनीय इति जागर्ति नः प्रार्थना पुरस्ताद्भवतः।

भगवतः सहस्रांशोः कर्मसाक्षिणः समक्षमेव खद्योतकीटस्तवनमिव, सर्वज्ञस्य भवत एवाग्रे पितामहस्यासास्वन्यतमस्य वैवस्वतस्यास्य श्लाघनमपीदं साहसं वात्सल्यातिशयवशात्सर्वथा क्षन्तव्यमेवेति प्रह्वा वयं भूयस्तरां प्रार्थयामहे॥

नैःऋतः प्रियसुहृदयमयमानोऽमानमानन्दं मन्दमपि न विन्दत इति वयं दूयामहे। परन्त्वस्मिन्विषये ऽस्त्याश्वासलेशस्य कोऽप्यवकाशो नः पश्यताम्। स्रष्टुर्दुष्टाशीविषेण रावणेन दिष्ट्या नातिदष्टः प्रविष्टोऽप्ययं गोष्ठ्यामस्माकमाशापालकानाम्। यतः प्रशस्ततरचरितोऽप्ययं सुमतिः स्फुरति नातिप्रसिद्धः। भाग्यायत्तमेवैतत्। विपुला खलु विश्रुतता कतिमिश्चन महनीयापि माननीयैः निसर्गजदौर्जन्यानार्जवानां प्रतिनिमिषसमुन्मेषिणीं द्वारीकृत्य दुरीर्ष्या परमरसिका भवति विपत्पारम्पर्यपरिप्रापणे सुतरामपकृपा।

अतः कृतधीस्त्रिकरणशुद्ध्या विधातुमेव विविधया पद्धत्या निगूढं जगत्क्षेममुदूढकौतुकोऽत्यन्तं विगर्हते विख्यातिं लोकेऽस्मिन्ननालोके। पथोऽस्माद्धि परिशुद्धात्प्राच्यवामहि विवेकविकलाः प्रतिष्ठाकाङ्क्षिणः। तत्फलञ्च कामं भुञ्ज्महे। हन्त! सत्यपीत्थं रक्षःपतिहतको न जहात्येनमपि। प्रादीयत नातिनिर्बन्धमस्मै दास्यमपि।

जागर्त्यद्य जातकानुकूल्यमस्य । अथापि न मन्तव्यमविरतव्यापारभरः शिरस्यपक्रूपमस्य न न्यस्त इति । आप्रबोधादा च सुप्तिं नियुक्तेनानेन भूयते वम्भ्रम्यमाणेनैव निदिष्टकृत्यनिर्वर्तनव्यग्रेण । कर्मणः फलस्य वा समुन्मीलति वैफल्ये, भर्त्सनोपमर्दनताडनादिभिर्नाति पीड्यते केवलम् । कूटस्थ इति गौरवात् जातिमिथ्याभिमानादन्यस्माद्वा न विद्मो वयं कादाचित्कस्यापि मन्दस्मितस्यान्यतमवक्त्रोत्थस्य क्षणमात्रमापद्यते पात्रताम् । अस्माकमेकमिमं वापि हन्त ! हतको नाति दुःखाकरोति क्रूरप्रकृतिरपीति वयं स्वस्तावता हर्षुलाः ।

दर्शकोऽयं क्लेशानामस्माकमीशानो नैव भवति नियन्तुमन्तः सन्तापं सम्मतः सतां सन्मतिः । सुरज्येष्ठ ! गरिष्ठस्य वा शुभगुणैरस्य मनःशान्तये दयया प्रतिविधत्तां भवान्विधातेति भूयो भूयोऽभ्यर्थयामहे ॥

भगवन्नयं खल्वस्माकं सुचेताः प्रचेताः कथमात्मनः कालं नयतीति विज्ञापयामः श्रृणोतु भवानिति । सृष्टेराद्यायाः स्रष्टुरत्रभवतो [1]भवत्ययमधिष्ठानदेवतात्वेन सञ्चकास्त्युपगतः प्रसिद्धिम् ॥ किञ्च सत्यदेव इति "सुदेवो असि वरुण यस्य ते सप्त सिन्धव" इत्याद्याभिः ऋग्भिः परामुपगच्छन्भाति प्रथां क्रतुभुक्ष्विति नैतदस्ति निवेदनीयं सर्वज्ञेभ्यो भवद्भ्यः । श्रौतेषु स्मार्तेष्वपि कर्मसु सर्वेषु नैनमृते कस्यापि भवति तावत्यावश्यकता । यद्दिमेनञ्च विहाय न किञ्चित्कर्मास्ति लौकिकमलौकिकं वेति को वा न वेद ।

लोकेश ! लोके नान्यदस्त्यस्मात्किमपि विषादास्पदं योऽयं संविदः श्रियः खलतायाश्च सहयोगः । अखर्वगर्वाय संविदमन्दमदाय सम्पद्यज्ञसम्बन्धाद्भुवनद्वयं दधतामस्माकं गोब्राह्मणानां च समूलमुन्मूलनाय मृगबलेन वरेण चोपोद्बलिता खलता चेत्यहो ! लोकैककण्टकोऽप्ययं श्रोत्रियः [2]शिवभागवत इति च कथङ्कारमृच्छत्यनच्छहृत्प्रसिद्धिमिति नश्चित्रमेतत् । किन्न जानीतेऽसौ सन्ध्ययोरहनि मध्ये च "महे रणाय च क्षसे यो वः शिवतमो रसस्तस्य भाजयतेह न" इत्यादिभिर्मन्त्रराजैर्मोक्षसाधनज्ञानस्यापि प्रदायकतया स्तूयमानस्य रसात्मना विश्वमन्तर्बहिश्च व्याप्य स्वयं स्थितवतः सकलसमाम्नायशिखरसंवेद्यमानमहिमसमुन्नप्रस्थानप्रशिरा राक्षसो वरुणस्य प्रभावं सकलतीर्थराजस्वरूपेण विराजमानस्य । यदिममपि क्लेशयति नैकैः प्रकारैः ॥

वपुष्मन्तमिव कमपि स्तोममेनसामेनमनुदिनमायस्यन्तं मृगयाव्यायामादिभिः प्रत्यग्रतयापुरःप्रत्युपस्थापिताभिरप्सरोभिरित एतु भवानित्याम्रेडनेन प्रत्युद्व्रज्य सप्रश्रयं प्रवेश्य स्नानसदनाभ्यन्तरमुपवेशितञ्च मणिपीठिकायां करपल्लवाकलितसकलाङ्गसुखावमर्दं राक्षसपाशं पाशयं दिव्यौषधिरसैः परिमलभरैश्च संस्कृत्य स्वात्मानं स्वयमेव समभ्येत्य समस्तपुण्यतीर्थस्वरूपोऽपि कामिनीकुचकलससंस्पर्धिनीषु कलधौतमयीषु क्षुद्रघटीषु निर्बन्धेन निविशमानः सुखोष्णस्पर्शं मन्दंमन्दञ्च स्नपयन्नप्यन्ते कृतघ्नेन पिशिताशापसदेन नेक्ष्यते कटाक्षमात्रेणापि । चेतो हि चकास्ति प्रविततमरुभूमायितः श्रीविलासैस्तत्रापि विशिष्य प्रदूषितस्य श्रोत्रियवेषेण । अपि च सूपकारमार्ग

---

1. सञ्चकास्ति भवतीत्यन्वयः । चकास्तिक्रियाच भवतिक्रियायां कर्त्री । पचति भवतीतिवत् ॥

2. शिवे भगवति भक्त इति विग्रहः । अत्र समासो भगवच्छब्दादण् च युगपदेवेति बोध्यम् । अयञ्च प्रयोगोऽयःशूलेतिसूत्रे भाष्ये ॥

मभिनवमभिनिविशमानस्यास्य वैश्वानरस्य साचिव्यमाचरताप्यनेन यथारुचि तत्तददनीयाद्यनुगुणरससमुत्कर्षाधाने भवत्ययं निर्बन्धोऽवश्यं प्रदर्शनीयः स्वात्मनः समग्रोऽपि निपुणिमेति ।

किञ्च न मुञ्चति मञ्चमञ्चितं चिह्नमलक्ष्म्या दिवास्वप्नमस्वप्नशत्रुर्दशकन्धरोऽसौ घर्मेऽपि समुग्रे भीत्या साच्छीतभानूयमानेऽस्मिन्भानौ शैत्यसौरभ्यमान्द्यैश्च स्पन्दमाने पवमाने ।

यदृच्छया प्रबुध्यमानाय स्वयमृतुनियतेः ऋते त्रासात्सर्वदा वितरद्भ्यः प्रत्याहृत्य तरुभ्यः फलान्यमृतमधुराणि यथानियोगं सन्निधापितपूर्वाभिरपूर्वसौन्दर्यसम्पत्समृद्धाभिः सादरभरं समर्प्यमाणानि वनदेवताभिरभ्यवहरते सस्पृहं पौलस्त्यायायमिङ्गितज्ञोऽस्माकं यादःपतिः प्रदातुं मध्येमध्ये न प्रमाद्यति रूपरसगन्धस्पर्शैः सकलजगन्मोहनीं प्रत्यग्रां सुरामपि वारुणीम् ।

प्रतिदिवसावसानवेलमब्धेरधिवेलमानुकूल्यकलनायातिवेलकुतूहलमनिलमनुग्रहीतुमातपपीतिमभूम्ना प्रत्यग्रद्रुतकनकलिप्त इव देदीप्यमाने सैकतप्रान्ते दुकूलोपकल्पितं तात्कालिकतया निकेतनमधितिष्ठन्तं प्रीणयितुकामः पङ्क्तिमुखमात्मनो रत्नाकरतां सार्थकयितुमिव पुरस्तादुपहारीकुर्वन्नपि रत्नानि नागकन्यारत्नैः साकमप्सरोमणिभिश्च हन्तैष यादसांपतिः प्रसादमाकाङ्क्षन्नन्ते परिभर्त्स्यते रे मूर्ख पारावार किमित्यमर्यादं सर्वेश्वरस्य मम पुरः शब्दायसे निर्मन्दाक्षमिति । किञ्च, कासारवदनूर्मिरेव सन्भृशं कुरु शब्दं, शिखरिशिखरानुकारिभिस्तरङ्गभङ्गैरप्यभङ्गैर्माभूः शब्दायमानो मनागपीति समदोद्रेकं स्वस्त्रीपरिवारसमक्षं विप्रतिषिद्धमादेशं विदधानः परिहासपुरस्सरमपसरति *दुर्वर्णविहारशैलशिखरमध्यारुरुक्षुर्विशालाक्षीभिः स्वैरं विजिहीर्षुः ।

अयं नः प्रियसुहृद्वाय्वादिभिर्विविधैर्व्यपदिश्यमानोऽप्यभिधानैरसममहिम्नो निस्सीम्नश्च महाव्योम्न एव स्पन्दात्मकः कोऽपि शक्तिविशेष इति तस्मान्नैव भिद्यत इति मतं वस्तुतत्त्वं विजानताम् । पृथिव्यप्तेजांसि भूतानि जगन्ति च भौतिकानि प्रादुर्भावयितुं स्थापयितुं तिरोधापयितुं स्वैरं विपरिणमयितुञ्च बिभर्ति सामर्थ्यमिति सर्वशक्तस्य परमेश्वरस्य प्रतिनिधिरिव समाराध्यःस्फुरति श्रुतिशिखरसमुदयसमधिगम्यमहात्म्यश्च । किञ्च पञ्चधात्मानं प्रविभज्य शरीरमनुप्रविष्टः तत्तन्नामानुरूप्येण कुर्वाणः कर्माणि जागर्ति जीवानामनुग्राहकः । स एवैष हि क्रियाशक्तिप्रधानः प्राण इति, सूक्ष्मतया वेदनाशक्तिप्राधान्यमापद्य मनआख्यया स्वामीव भृत्यान्प्रेरयितुमिन्द्रियगणान्स्वेषुस्वेषु विषयेष्वीश्वरो भवति स्वयञ्च सङ्कल्पादि कलयितुम् ।

अधिदैवमधिभूतमध्यात्मञ्च नानेव समुपलभ्यमानस्य द्यावाभूम्योरेकः प्रेमार्भक इवान्तराले सदागतिमत्तया विहरतः स्वैरमतिबल इति यथार्थनाम्नोऽस्यैव प्रभावादन्तर्बहिश्च व्याप्य सुस्थितिमत आब्रह्मस्तम्बपर्यन्तमुच्चावचभावमुपगमितेषु क्रियाः सर्वा अप्युपहिता वस्तुष्वभिनिष्पद्यन्ते फलवत्यः । अपि च परमरसिकः परिस्फुरत्ययं पवमानो यतः स्वयमननुभूय वैषयिकानन्दममन्दमन्यान्नानुभावयति । अथाप्याचरत्येव त्रासाद्दशमुखस्य कैङ्कर्यम् । स्वयं भुक्त्वा परेषां भोजयितापि किन्न परिगण्यते पाचकः किङ्कर इति । यच्च—

---

* दुर्वर्ण=रजतम्

स्तनतटलुठत्सूक्ष्मक्षौमप्रतिक्षणकर्षण-
प्रभवसुभगाक्रोशश्राम्यद्दृगन्तसमञ्चितः ।
तरुणरमणीर्गाढं प्रेम्णा परिष्वजतेऽम्बुधे-
स्तटभुवि गिरेः शृङ्गे चायं निषेवितुमागताः ॥

इत्येतदपि न व्यभिचरति पारार्थ्यं सर्वथा। हन्त! लोकरावणरावणान्तःकरणपरिप्रीणनानुगुणकर्मणि सुनिपुणं व्याप्रियमाणेनानेन जगत्प्राणेन किं वा न करणीयमरमणीयम्। साध्वी भवत्वन्या वा पत्युःपिशितान्धसामस्य कामान्धस्य विंशत्यायसत्यै दुश्चक्षुषां दुर्दैवगत्या रोचमानायास्त्रस्तचमूरुविलोचनाया मङ्गलसदनमनङ्गस्य वदनमिन्दुसुन्दरं, कुम्भिकुम्भन्यग्भावस्वभावावुरोभुवौ, विपुलपुलिनमसृणः सुजघनाभोगश्च कामं घनः, मीनध्वजनात रूपसरूपविजयस्तम्भयोरिव परीणाहः कोऽपि परिभास्वरयोरूर्वोः समस्तमेतच्चञ्चलचारुचेलाञ्चलविचलनसमाकलनेन दरमदरं युगपदयुगपद्वा यथाभिप्रायमभिप्रदर्श्यमसततस्वसतानेन नभस्वता माधः पतदिति कुसुमस्रजं कबरीभराद् दृगन्तसंस्तवसुभगादवतंसञ्च कर्णपथात्सप्रयतनं परित्रायमाणेन सिन्धुरोधस्स्वद्रिशृङ्गेषु हृदयङ्गमेषु च प्रमदावनेषु ।

मदवारणस्येव करेणुभिर्वरवर्णिनीभिरस्य रममाणस्य रावणस्य ह्यविशुद्धान्तमशुद्धान्तःकरणस्य सन्तोषाय योषिद्वदनारविन्देषु नीहारबिन्दुसन्दोहसुन्दरान्मन्दं मन्दं सुखसंश्लेषेण विशोष्य स्वेदलवान्सुरतश्रमसम्भृतान्मद्रङ्करः परिष्वङ्गोऽपि भवति सम्पादयितव्यः कोऽपि निद्राया मातरिश्वनानेन विनायासेन दाक्षिण्यसम्पन्नेन हन्त! सुमनस्स्वेवं विमानायमानोऽयममानयानया हीनया वृत्त्या मारुतः समयं नयन्स्वीयं वर्तते माननीयोऽपि मनीषिणामिति विषयोऽयमस्मान्किन्न दुःखाकरोति ।

हिरण्यगर्भ! वयमर्भका इव स्वार्थपरतया यदभिदध्महे तन्न भगवतः सार्वज्ञ्यमपोढुं, किञ्च मन्तुमपि तद्भवति दुःशकमपि तु विपदो व्यपोहयितुं प्रभविष्यति भवानेवेत्यवष्टभ्य धैर्यं किमपि, प्राप्तुं मनसः शान्तिं परमिति विज्ञापयन्तः सप्रश्रयं शेषमपि श्रावयामः ।

लोके धनवानेको धनकारस्त्वपरः। धर्म्ये न्याय्ये च पथ्यगृध्नुराददानोऽर्थमसक्तः काममनुभवन्नुपनिपाते च समुचितदेशकालपात्राणां यःसर्वस्वमपि निर्विशङ्कं त्यजति स धनवानीश्वरांशभूतो महात्मा। एतस्य धनमपि भवत्यनिधनमिति मतं सताम्। प्रशंसायां हि मतुबत्र। यस्तु कुसीदवृत्त्या तत्राप्यन्याय्यया चाधर्म्यया धनं वर्धयन्स्वप्नेऽपि किमपि न वितरति स-कीर्त्यते धनकार इति। पापीयस्यानया वृत्त्या स्वकुटुम्बमेव जगति बृहन्तमभिमन्यमानस्तपस्विजनमनांसि क्लेशयन्नगणयंश्च दीनाश्रुशस्त्राणि, वञ्चनया कालक्रमेणापजिहीर्षन्गृहभूम्यादि च विप्रोऽपि सन्व्याघ्रप्रायः क्रौर्ये जलूकाकल्पश्च रुधिरपाने शास्त्रैरत्युग्र दण्ड्य इति धार्मिकलोकमर्यादा ।

अतो धनवान्मह्यते धनकारस्तु गर्ह्यते। वैश्रवणोऽयं नः पुण्यश्रवणो न केवलं धनाधिपः किन्तु धनदश्च स्फुरति महोदारप्रकृतिः सौभ्रात्रेणापि महता महीयमानः। राजराजतया विराराज्यमानेन निर्व्याजसौजन्यैकभाजनेन भ्रातृतया सभाजयितव्येन च दुर्जनाग्रेसरोऽयं दशग्रीवो विगृह्य प्रसभमपजहार पुष्पकं नाम विमानराजमति

पुष्प[1]वल्लक्ष्मीकम् । भवतु वा भ्रातृभावः त्र्यम्बकसखत्वकृते च किमदित गौरवं स्वयं भवन्भवभक्तः । कः प्रष्टुमीष्टे ऽत्र दुष्टविचेष्टितम् ।

अथवालर्कस्य लेहनशीलस्य न कश्चिद्विशेषः पाषाणशिवलिङ्गयोः । यतोऽयमुपास्यं शिवमप्यभिद्रुह्यन्मदोद्रिक्तः कन्दुकयितुं प्रवृत्तः कैलासमतुलश्रीविलासम् तत्कालमतिवेलं भीत्याकुलशैलाधिराजप्रियात्मजायाः स्वयङ्ग्रहपरिष्वङ्गसुखमानुषङ्गिकमनुभवन्तं भगवन्तमङ्घ्रिसरोजाङ्गुष्ठाग्रमात्रस्य दरानादरपुरस्सरं निक्षेपेण शिक्षयन्तं विरूपाक्षं चूर्णीक्रियमाणैरिव विंशत्या भुजैर्व्यथितव्यथितःक्रन्दंश्चोच्चैस्तरां प्रसादाय श्रवणमधुराभिः समतूतुषत्सामगीतिभिराशुतोषं दोषाकरार्भकशीर्षभूषाविशेषं दोषाचरेश्वरो विलुम्पितावलेपःपुरस्तान्निलिम्पानामपीतित्वन्यत् । नैवावकल्पते ह्यात्यन्तिकदमनाय दुरात्मनां निग्रहस्तात्कालिकः । च्छिन्नाङ्कुरोऽपि समूलमनुन्मूलितः पुनःपुनः प्ररोहति विषकन्दः । कदाचिन्नियुध्यमानो दिक्सिन्धुरैर्दशकन्धरश्चक्रिचक्राद्यभिघातव्रणकिणनिकरैरलङ्कृतपूर्वमप्युरस्थलमलं विपुलमर्धसञ्छिन्नतयात्यन्तमच्छप्रकाशैर्दन्तैस्तदीयैरेव पुनर्दन्तुरयन्नरुन्तुदं त्रासाक्रन्दतस्तान्कान्दिशीकयते निर्दयतामयमवमानः । कदाचिदाकाशमप्यावेष्टयितुमिव चेष्टमानः साटोपमध्वानमपि निरोद्धुमुत्कण्ठते दशकण्ठः कठोरकरस्तथा नक्षत्राणामधीश्वरस्य । जातुचिद्दिक्षुवणमिवानुप्रविश्य मत्तमतङ्गजश्चैत्ररथं मनोरथमात्रोपकल्पितमिव देदीप्यमानं क्षणमात्रादलक्ष्मीकमाकलयते साकं किङ्करैर्लोकभयङ्करैर्लङ्केश्वरः । कदाचन काञ्चनाचलमपि चपलात्मा चालयितुमलं लसतीव लालसः । क्वचन समये प्रकम्पनमप्यकम्पयितुमीहते । अवसरे च कस्मिंश्चन काञ्चनाङ्गवलीभिर्विलासवतीभिर्न्यक्कुर्वतीभिरिव कामिनीं प्रद्युम्नस्यापि स्वैरं विहृत्य सपदि जातोन्माद इव कासराकारभीकरः शिशिरसरसवारिपूरमेदुरं मानसञ्च सरोवरं कलयते पङ्किलमाढौकमानः पाण्डितीं महाब्धिमपि क्षणात्क्षोभयितुम् । अपिच प्रसाद्य निरवद्यहृद्यगानविद्याविशारदं मन्दोदरीसुन्दरं पारितोषिकमाप्तुं समवेताय, सन्नर्त्य च स्वर्वारवनितारणन्मणिकङ्कणनूपुरमेखलं यथाशास्त्रप्रक्रियं श्रुतिमधुरस्वरं गायते च स्वयं गणाय गन्धर्वाणामुपज्ञाय सूक्ष्मेक्षिकया किमपि स्खालित्यं शिष्यायेव खण्डि[2]कोपोध्यायश्चपेटां दत्वा समुन्मिषदीर्ष्ये परिषदः प्रेषयति दशशीर्षे, निवेदितवार्तो भवदात्मजो मुनिरपि वीणापाणिः किं करवाणि नाहं केवलं शोचामि पश्यत

"रागान्तरालापकृते यत्नादास्फालितापि मे ।
शोकाभिव्यञ्जकं रागं न मुञ्चति विपञ्चिका ॥"

इति व्याहरन्हास्यरसास्वादसुहितान्विदधाति क्षणमात्रं हाहाहूहूमुखानखिलानपि । धिङ्मूर्खस्य परां काष्ठां विद्यागर्वस्य । न केवलं क्लिश्नीमो वयमाशानां पालकाः साकमन्यैराजानदेवैः कर्मदेवैश्च । किन्तु जगत्स्रष्टोऽपि तपस्विन्य इति साम्प्रतं वक्तुम् । ब्रह्मन्नदिष्महि दिविषदामीश्वराय भवते श्रममनेन समुपन्यासेन द्राघीयसा । किञ्चिदिवोदाहार्ष्म न पर्यजीगणाम बुबोधयिषितमनभिहितंसदनुतापं मा जनयत्विति । क्षम्यन्तामिमे भावत्काः शोच्या इत्युपसञ्जहुर्निर्जराः ॥

—: * :—

1. पुष्पवन्तौ=सूर्याचन्द्रमसौ ॥ 2. खण्डिका=अनुवाकविशेषः ।

## ॥ ब्रह्मणोऽभिसन्धानपूर्वकं सान्त्वनमुपायकथनञ्च ॥

इत्थमभिधायैकविधया विबुधेषूपरतप्रायेषु शृण्वन्नण्वपि विकुर्वाणो नालक्ष्यत बर्हिर्द्रुहिणः कृपणेषु भूरिकरुणार्द्रहृदयो गीर्वाणेषु । अभिनवजीमूतविद्योतनगर्जनाभिवर्षणाद्यैरप्यत्युग्रैः शिखरिणमिवाविकारिणं महार्णवमिव चाक्षुभ्यमाणमुदीक्ष्य व्यसुश्चित्रीयमाणान्तःकरणाः सुपर्वाणः । को नाम जानीतामतिमात्रगहनानि महात्मनां हृदयानि । तत्क्षणं वैवर्ण्यमजहति क्रतुभुजां पश्यन्वक्त्राणि, वक्ष्यन्नप्यभ्युपायं कृपया भगवान्पद्मयोनिः, "स्वार्थमात्रसाधनौन्मुख्येन प्रवर्त्यमाने चतुरिमभिरसमानेऽस्मिन्प्रसङ्गे गिरां गीर्वाणा इदं खल्विमे चित्रयन्ति स्वैरमध्यारोपयन्त्यसानधिसुवर्णशिखरिशृङ्गं कदाचिच्च विनिपातयन्ति पातलस्याप्यधस्तादिति । तुलादण्डवद्विमाय तपस्तपस्यतां तदनुरूपमेव वितरामः फलमधिकारपदमध्यासीनाः । तथाप्येभ्यो न रोचामहे । यदीमेऽपि चरित्वा दुश्चरं तपोऽप्राक्ष्यंस्तर्हि वयमदास्यामैवेति किमिति न विदन्ति त्रिदिवेशा अपि । हन्त ! नैयून्यमात्मनीनं वेत्तुं विरल एव कश्चिद्भवति सुरासुरनरेषु । यस्य स्फुरत्यभिनवं किमपि चक्षुः समग्राणि शास्त्राणि भगवति भक्तिरावश्यिका भवेऽकृतसुकृतानामसुलभा पदमितरदुरासदमतिसुन्दरं च किमपि लङ्काद्वीपं विशुद्धान्वये जन्मलाभः सोऽयं पौलस्त्यः पौत्रो मम कामं भवत्यसाधुरित्यत्र नाक्षेपः कोऽपि प्रेक्षावतामथापि तद्वदतप्यत को वा तपः सुदुष्करं । को वा होष्यन्नभिलषितसाधनाय निर्विशङ्कमच्छैत्सीच्छिरांसि तालफलानीव प्रसादयितुमस्मादृशान् । अपि नामेमे लेखाः केवलं साधवः । नाम्ना सुमनस्स्वेषु प्रसरति सर्वदैव न्यायो मात्स्योऽपि । यदेते पुण्यैकलभ्ये वर्तमानाः पदे परस्परमकलहायमाना न भवन्ति । आजानदेवा हि तृणायापि न मन्यन्ते निकुरुम्बं कर्मदेवानाम् । कामादिषडरिवर्गो हि नैतेभ्योऽन्यत्र तथा पराक्रममाणो दृश्यते । हन्त ! शतमखोऽयमुच्छृङ्खलः कतीनां न व्यध्वंसयदध्वरानतिशङ्कमानः स्वस्थानपरिभ्रंशम् । कतीनां वा मुनीनां कौशिकमुखानामुन्मूलयितुमकल्याणमतिस्तपांसि दुश्चराणि विघ्नाञ्शतमुखानचकलन्महात्मनाम् ।

स्ववारवामभ्रुवः प्रसभमपहृत्य रममाणं रावणं द्विषन्नयं जिष्णुरभ्यद्रुह्यत्कति वा महर्षींस्तपस्विनो हन्त ! तदीयान्धर्मदारांश्च'रित्रात्स्वैरं प्रभ्रंशयमानः । कति वा वारानजितेन्द्रियतया न प्रातिष्ठत त्रिविष्टपान्मध्यमलोकमपजिहीर्षया लेखर्षभः स्वयंवराभिलाषिणीनां मानुषीणाम् । किं वा न दर्पादार्पिपत्स्रजं समनुगृह्य वितीर्णां दुर्वाससा भगवता स्वगन्धसिन्धुरकन्धरोपरि वासवोऽयमवजिज्ञासया । किञ्च वञ्चनयाश्वमेधतुरगापहारिणं मृषा ग्राहयित्वा भगवन्तं कपिलं तदीयक्रोधदावानलेन भस्मसादकार्षीत्षष्टिं सगरपुत्रसहस्राणामयमेव सहस्राक्षः । कतिभ्यो वा मुखेभ्यः शतमखमुखा इमे बर्हिर्मुखाः स्वकार्यसाधनैकव्यग्रा नोदजीघटन्वाक्यान्यनृतानि सम्प्रेर्य भारतीम् । किन्नै कोक्त्या ? उपनिषदः खल्वप्यमीषामुद्घोषयन्त्याख्यायिकाभिः खपुष्पायमाणं दममीर्षासमुन्मेषं श्रीमदोद्रेकञ्च तत्र तत्र । [1]अपचरितैः सञ्जानाना अप्येतेषां मनुष्यास्तत्रापि विशिष्य भारतीया गुणमात्रग्रहणरमणीयप्रकृतयः सभक्त्यतिशयमाराधका एव भवन्ति यागदानहोमैरिति विस्मयमानमानसा सः संवृत्ताः । देवभाव एवैषा

---

1. संज्ञोन्यतरस्यामिति कर्मणितृतीया ।

माच्छादकः समग्राणां दोषाणामित्यभिप्रयन्तः सङ्गरेऽपि दैवासुरे क्रियासमभिहारेण जायमाने विजयलक्ष्मी स्वयङ्ग्रहाश्लेषसुखितान्विदधते दशरथप्रभृतयोऽपि पुरुहूतमुखानिमान्सर्वान्प्राक्तनकतिपयराजर्षिक्षुण्णचरसरणिमव तीर्णाः। अथापि चिरनिरूढ उदूढद्रढिमा च जागर्त्यात्मस्वेवाधिक्याभिमानोऽमीषामपेक्ष्य मानवान्। युक्तश्चैत दन्यादृंशि हि स्थानानि सञ्चकासत्यमीषामीश्वरसमयोगक्षेमसमाम्नायमहापुरुषैकोपज्ञायमानमहिमसम्पन्नानि। कथमन्य श्रेयुरुपास्यताम्। अथापि मनुष्याणां तत्रापि लब्धजन्मनां भारते कोऽपि समुत्स्फुरति समुत्कर्षस्त्रिदिवेशानपेक्ष्य। एतैर्ह्यधिकारिकतया सत्यपि ज्ञाने यावदधिकारं वोढव्यमेव स्थानमिति भवति महान्निर्बन्धः। मध्ये मध्येऽप्रति विधेयप्रायतया विधीयमानोऽसुरादीनामुपद्रवोऽप्यक्षुद्रः सोढव्यः। वैराग्यमपि क्लेशानुभवजन्यं नावकल्पेत फलाय ज्ञानवदित्यहो! तपस्विता तेजस्विनामपि। मनुष्यस्तु श्रद्धधानस्तीव्रमुमुक्षुज्ञानश्च लब्धज्ञानः प्रभवति क्षिप्रमेव भवितुं मुक्तः। अत एव तादृशमधः पातयितुमुदितेर्ष्या इमे सन्नह्यन्त्यनिमिषाः संहत्य बद्धपरिकराः। किम्बहुना दश कण्ठप्रभृतयोऽप्येतेषां द्विषन्तः क्षिप्रमेव तीर्णभवार्णवाः श्रयेरन्परमं पदम्। द्वेषभवनापि भगवति सन्ततं सन्त न्यमाना तन्मनस्कतात्मिकेति त्वरितं मुक्तिप्रापणे प्रभवति कापि तिरश्ची पद्धतिः।

सर्वात्मना भारतीया भवन्ति भाग्यवन्तः, स्वर्गादपि सहस्रगुणं प्रशस्तश्च भारतवर्षो ज्ञानविज्ञानाचार्यतया देदीप्यमानो देशान्तराणाममृतान्धसामपि दायकोऽन्नानामिति धर्मार्थकाममोक्षाणां वितरणे महाकामधेनूयमानाय, भायामात्मविद्यायां रताय नित्यं, भारतायास्मै वर्षाय स्पृहयन्त ईश्वरा अपि नारायणादयः कर्तुमवतारं क्रियासमभि हारेण कामयन्ते। ब्रह्मविष्णुरुद्रा वयमीश्वरा जीवात्मानश्च यस्मिंश्चिन्महाकाशे परमानन्दसागरे वा मन्दामन्दगतय इव सदागतयो वीचय इव वोचावचाः प्रतीयामहे प्रातिस्विकमयमाना इव महिमानम्। यश्च सर्वेषां प्रत्यगात्मा बौद्धप्रत्ययानां साक्षी च तत्परं ब्रह्मैव सर्वश्रुतिशिखरसंवेद्यं ब्रह्मवित्त्वात्स्वे[1]नरूपेण श्रीमद्रामस्वामि वपुषावतरिष्य त्ययोध्यायामेकैकोऽपि रामवज्जीवन्मुक्तो भवितुमलं श्रुतिप्रामाण्यादिति बोधनद्वारा मानवजातेरभ्युन्नतिमनुप चरितां सत्यापयितुम्। मत्स्यकूर्माद्यवतराणां हि भगवतो नारायणस्य फलं दुष्टनिग्रहणेन शिष्टपरिरक्षणमात्रमत एव तत्तत्सन्दर्भे यथाक्रतुभुगभ्यर्थनमात्मानं प्रादुर्भाव्य निर्वर्तितात्मकृत्यस्याविलम्बं स्वधामोपगमनं पद्मनाभस्य। स्वोपदिष्टकर्मसन्यासयोगरहस्यज्ञानतया प्रशस्तस्य कर्मसाक्षिणो भगवतः सवितुरनाविले कुले जनिमतां मन्विक्ष्वा कुमुखानां वपुष्मतामिव धर्मस्तोमानामविच्छिन्नविद्यासम्प्रदायानां राजर्षीणामृक्षाणां मध्य इव मिहिकामयूखस्य प्राकृतैरवतीर्णस्येव परं लक्ष्यमाणस्य द्विभुजस्यापि नराकारस्य चतुर्भुजाद्यैरुपासनीयस्य द्विनेत्रस्यापि त्रिणेत्रेण सहपार्वत्या नित्यं नामसङ्कीर्तनपुरस्सरमाराध्यमानस्य निरुपमनिस्सीमात्ममहिम्नि नित्यप्रतिष्ठस्य सर्वेश्वरेश्वरस्य रामस्या त्मारामस्य सक्षाद्ब्रह्मणः परस्य साकेतनाथस्यापि समस्तजगतामेकनाथस्यासमाभ्यधिकस्य सर्वलोकपुण्यकर्मपरिपाकव शेनैव प्राप्तप्रादुर्भावस्य कस्यापि करुणावरुणालयस्य जगद्भद्रङ्करणैकप्रवीणस्य सर्वश्रुतिशिखरैकसारस्य त्वस्य कर्माण्य साधारणानि प्रातःस्मरणीयस्य भगवतः पुण्यश्लोकस्य खलु भवन्ति लक्ष्यमाणानि।

अव्याजसौजन्यैकपर्जन्यस्यास्य सकलजीवलोकरक्षण धर्मस्य परिरक्षणं स्वधर्मरक्षणं स्वजनरक्षणं स्वस्वधर्मेषु नियोजनञ्च चातुर्वर्ण्यस्येत्येतत्समुदितात्मकं यद्धर्मसंस्थापनं तन्नेतरावतारेषु दृष्टं विष्टरश्रवसः। एतन्निर्वहणार्थमेव

1. ब्रह्मवि ब्रह्मैव भवतीति श्रुतेः।

मनुकुले प्रादुर्भावः। मनुष्याणामेव धर्मादिष्वधिकारात्। अत एव निर्वर्त्याप्यानुषङ्गिकमवतारान्तरसाधारणं दुष्टनिग्रहपूर्वकं शिष्टरक्षणं न सद्यस्तिरोधास्यति किन्तु यावद्धर्मसंस्थापनं सम्पद्येत स्वाभिमतमुदूढद्रढिम तावदेकादश सहस्रसंवत्सरपर्यन्तं सहमानः क्लेशान्वत्स्यति च धर्मवत्सलतया भारतभूम्यामेव वैकुण्ठादिभ्योऽपि निजवासादुप गमितायामभ्यर्हिततताम्। ऋषिमखकृते तातं तातकृते राज्यं राज्यकृते धर्मदारांश्च त्यक्ष्यन्नयं धार्मिकहर्यक्षः, सर्वप्रत्यगात्मतयैव जीवेभ्य इवेश्वरेभ्योऽपि प्रदातुमभयं निरतिशयमीश्वरस्त्याग एव कोऽपि मूर्तिमान्कथमुपमीयेत केन वा ब्रह्मविष्णुरुद्रादिभिरनुन्मत्तेन प्रभुरस्माकं भगवान्राममद्रः। स्वात्मभूते निरतिशयप्रेमास्पदत्वाद्रामचन्द्रेऽजस्रं रामो रामो राम इति जनानां भविष्यति कथापि। ईश्वरस्याप्यात्मत्वेन काश्यां मुमूर्षूणां विश्वनाथेन रामनामोपदेशः क्रियते कर्णे। भार्गवगर्वहरणं शिवधनुर्भङ्गादिकञ्च नारायणशङ्कराभ्यामप्याधिक्ये किन्न प्रमाण भावमुपगच्छति। तथा पौलस्त्यबधोऽपि न प्रच्छन्नदेवभावैरपि शक्येत कर्तुमीश्वरैरन्यैर्वान रैनैः साकेताधीश्वरा दिति तु जागर्ति रहस्यं परमम्। ब्रह्मविदः पारम्यमन्यादृशं स्फोरयितुमेव शिवभक्ताग्रेसरमन्तर्यामितया दशकन्धरं प्रेरयामास परं ब्रह्म, वरयितुं पारिशेष्यात्प्राप्तं नरान्मरणम्। सर्वसंसारोऽप्यसंसारः सर्वेश्वरोऽप्यनीश्वर सर्वाकारो ऽप्यनाकारः सर्वगन्धोऽप्यगन्धः सर्वरसोऽप्यरसः सर्वकामोऽप्यकामः सर्वात्मकतया सर्वदा सर्वत्र सर्वथा स्वात्मान माविर्भावयितुमृच्छन्सामर्थ्यमच्छद्मदामार्तिहरणप्रवणनारायणचरणशरणीकरणैकशीलितान्तःकरणानामभूणामेषां पुरतः करुणानिधिरधुनैव सन्निधास्यत्यनुग्रहीष्यन्हृषीकेशस्वरूपेणे''ति समस्तमप्येतदन्तरभिसन्दधानः क्षणमासीनस्तूष्णी मीषदहसीत्।

असमान्त्वञ्च त्यजत भीतिं भो त्रिदिवेशाः। नह्यत्र वरदानं केवलं कारणं किन्तु नियतिरपि। [1]शुभाशुभ फलोदया हि सततसन्निहिताः सज्जाश्च सुभृता इव भृत्या वर्तन्ते पुंसामग्रत एव। अतोऽनुभवादृते न केनापि किमपि शक्यते कर्तुमिति किन्न जानीध्वे प्रज्ञावन्तः। आगमापायिन इतीमे तितिक्षितव्या भवादृशैर्विदितवेदितव्यैः कालानुकूल्यं प्रतीक्षमाणैः। किञ्च सुखदुःखादिकं सर्वमपि मनस एव। न नित्यशुद्धबुद्धमुक्तस्यात्मन इति विवेकेन शोकमोहादीनां कार्यो व्यपोहः प्राज्ञैः। तरङ्गभङ्गभयङ्करोऽपि समुद्रो न तटस्थत्वेन पश्यन्तमीश्वरो निमज्ज यितुमपित्ववतीर्णमेव। एवमचिन्त्यानन्तचिन्तासन्तानैः कामं प्रवहत्वन्तःकरणमहार्णवोऽपि सन्ततमजय्यताङ्गतः प्रज्ञारहितानाम्। आत्माख्यं परममभयं पारमधिष्ठाय तिष्ठतां तु किं स्यादनिष्टं पश्यतामपि साक्षिणामिव दुर्वृत्ती र्मानसीः। द्वैतप्रपञ्चं पृष्ठतः कुर्वञ्शान्त आत्मनि शिवे ह्याभिमुख्येन दत्तदृष्टिर्धीरवृषभो नन्दी भवति। तद्बुद्ध्यध्वम्। शिवोपि स्वीयया चन्द्रचूडतया मनसो बहिष्कार्यतामेवाभिव्यनक्ति। चन्द्रो हि मनआत्मकः। धीमता मलमियानेवोपदेशो भवतामित्यभिप्रैमि। अथापि ब्रुवे कमप्युपायं रक्षःपतिरसौ सर्वेभ्यः स्वस्यामरणं वृणानो नरमवज्ञानान्नाकीर्तयदिति। इत्थमाकर्ण्य द्रुहिणभणितं गीर्वाणाः कस्यचिदुपायस्य लाभमात्रेण यावत्प्राहृष्यस्तांव देव तत्र समुपयातो महाद्युतिर्भगवान्विष्णुरपि शङ्खचक्रगदापाणिः पीतवासा वैकुण्ठाद्यज्ञवाटं दशरथस्य जगत्पतिः। परत्वसौलभ्ययोरितरदैवतदुर्लभतां भक्तपरतन्त्रताया अनियन्त्र्यतामार्तत्राणैकप्रवणताया असाधारणतां

---

1. सज्जाः सन्निहिता नित्यं शुभाशुभफलोदयाः। तिष्ठन्ति पुरुषस्याग्रे सद्भृत्याः सुभृता इव। इति क्षेमेन्द्रः।

रक्ष्यलाभसन्दर्भस्पृहयालुतायाश्च सर्वरक्षकस्यात्मन प्रकृतिसिद्धतां रसिकः स्फोरयितुमिव, स्वयं व्याप्य स्थितोऽपि विश्वं तत्क्षणमप्रार्थ्यमानः करुणया परं पुरःप्रादुर्भवन्निम्नन्दकच्छक्तिमनिमिषाणां न्यक्कुर्वंश्च सप्तसप्तीनामयुतं तेजसामेकपुञ्जो व्यभ्राजत भगवांश्चतुर्भुजः । सपदि समुत्थाय ससम्भ्रमं लोकपितामहस्यापि स्वस्य तदर्भकतया प्रह्वोऽत्यन्ताय विहिताञ्जलिः प्रत्युद्गज्याब्जयोनिर्नियुञ्जान इव निर्जरान्समाप्तस्यापि मत्स्तुतिपद्यस्य भगवद्विषयतया पुनरात्तता तादृशानां भवत्यावश्यिका गुणायैवेति समाप्तपुनरात्ततारूपकाव्यदोषमिषेण सचमत्कारमभिव्यञ्जयञ्जगौ भक्त्या निमीलिताक्षः पङ्कजाक्षस्य समक्षम्—

करकलितरथाङ्गं कल्पितारातिभङ्गं
महिमभिरतितुङ्गं मञ्जुशय्याभुजङ्गम् ।
शिशिरितदृगपाङ्गं श्रीरमास्याब्जभृङ्गं
श्रयत विधुतसङ्गं संस्रवत्पादगङ्गम् ।। इति

अनुपदं प्रहर्षप्रकर्षाविष्कारार्थमस्ताविषुरुच्चैस्तरां दिविषदोऽप्युपनिषदेकसमधिगम्यं परमं पुरुषम्—

## ॥ देवकृता नारायणस्तुतिः ॥

पद्माविश्रममन्दिरं जलनिधेः सारेण [1]दीप्रं भृशं
श्रीवत्सेन परिष्कृतञ्च तुळसीहारेण चेतोहरम् ।
त्वर अङ्कूरैस्छुरितं विसृत्वफणिप्रत्यग्ररत्नत्विषां
श्रेयो भूरि निरन्तरं वितरतात्कम्रं मुरारेरुरः ।।

भ्राजेते तव चक्षुषी शशधरःसूर्यश्च विश्वात्मनो
दैत्यान्घातुक ! ते हरे ! त्रिपथगा जाताङ्घ्रिपाथोजतः ।
त्वन्नाभ्यम्बुजतोऽजनिष्ट जगतां स्रष्टा श्रियः कामुक !
प्रत्यूषे बिभृमः स्मृतिं भगवतः पादाम्बुजस्यान्वहम् ।।

किरिरुदधरः पृथ्व्या गोलं श्रुतीश्च झषाकृति-
र्जलधिजठरे कूर्माकारोऽबिभः पृथिवीधरम् ।
युगपदभिनःस्तम्भं शत्रोरुरश्च नृकेसरी
बलिमदमयश्चातुर्येण त्रिविक्रम ! वामनः ।।

---

1. जलनिधिसारः कौस्तुभः ।

[1]दामोदराय सुरवैरिहराय हार-
केयूरमेदुरतराय सुरेश्वराय ।
नीलाभ्रसोदरशरीरमनोहराय
श्रीभूरमासहचराय नमो नमस्ते ॥

हस्ताब्जराजदपराजितचक्रराज-
कौमोदकीविजयिनन्दकपाञ्चजन्यम् ।
आलोलनीलतुलसीदलमाल्यदिव्य-
गन्धेन बन्धुरमुरो दधतं सरामः ॥

जन्मादिरस्य जगतोऽस्ति यतः स च त्वं
सच्चित्सुखात्मकतया श्रुतिमौलिसिद्धः ।
भूतस्य तेऽस्य महतो यदृगादिवेद-
जातं तदप्यहह ! निश्श्वसितं श्रुतं हि ॥

उच्चैरुच्छ्वासझञ्झामरुदुरुविरुवद्वार्धिसम्भेदभीमो
दिक्ष्वास्फोटार्भटीभिर्द्रुतकरटिघटात्रुट्यदुर्वीध्रकूटः ।
स्तम्भादाविर्भवन्द्राक्खरतरनखरैः संविदार्यासुरोरो
नृत्यन्रक्तार्द्रितान्त्रस्रजमवतु गले बिभ्रदुग्रो नृसिंहः ॥

पीतवाससमात्तशार्ङ्गशरासनं रिपुनाशनं
स्फीतगोत्रभिदश्मशैलसगोत्रगात्रविराजितम्
गीतमागममौलिभिर्नलिनेक्षणं शुभलक्षणं
केतनायितवैनतेयमुपास्महे मधुमाथिनम् ॥

कुण्डलद्युतिमण्डितोभयगण्डपालिमनोरमं
[2]चण्डरश्मिकुलेऽवतारिणमण्डजाधिपपूजितम् ।
खण्डनाय निबद्धकङ्कणमादिते[3]यविरोधिनां
पुण्डरीकविलोचनं प्रणुमोऽन्वहं करुणार्णवम् ॥

---

1. इदमपिदामोदरायेति भाविनः कथनमन्तर्यामिप्रेरण्या । 2. अन्तर्यामिप्रेरणया भाविनोऽपि रामावतारस्यकथनम् ॥

3. कृदिकारादितिङीष्यपि लिङ्गविशिष्टपरिभाषया दित्यदितिशब्दाभ्यां ण्यस्यैवप्राप्ते दैतेयादितेयावसाधू । अत्रामरस्यापि प्रमाद एव । एवञ्चात्रादितेयशब्दोऽसाधुरपि प्राचामनुरोधात्प्रयुक्तः क्षन्तव्यः ।

उरोरुक्मवर्मस्फुरद्रत्नरोचिः—
प्ररोहैरुदग्रैर्दिशो भासयन्तम् ।
सरोजाक्षमक्षुद्रभद्रप्रदाने
पुरो जाग्रतं श्रीनिवासं भजामः ॥

[1]श्रियमरं सुमरञ्जितकुन्तलां
दुहितरं नतरञ्जनतत्परः ।
दधदयं सदयं स सुधाम्बुधेः
वितरताद्वरतामरसेक्षणः ॥

स्तुतिर्गुणिगुणोक्तिरित्यभिहिता कथं स्यात्त्वयि
श्रुतिप्रकरमूर्धभिर्यदभिधीयसे निर्गुणः ।
अशेषगुणशेवधिर्यदि तदापि ते दुर्ग्रहा
गुणस्य बत ! कस्यचिद्ग्रहणमत्र निर्युक्ति[2]कम् ॥

अतस्तूष्णीं वयं स्मोऽद्य शक्त्या विरहिताः प्रभो ।
क्षम्यतामपराधो न[3]स्त्रायस्व शरणं गतान् ॥ इति.

## ॥ विष्णुनिकटे देवानां प्रार्थना, देवान्प्रति प्रसन्नस्य विष्णोरभयदानमन्तर्धानञ्च ॥

इत्थमभिष्टूय, रक्षणकर्मणि स्वयमेवाजस्रव्यग्रं भगवन्तं विनतात्मजध्वजमवरा अप्यमरा वयं लोकानां हितकाम्यया भगवंस्त्वां नियोक्ष्यामहे पुण्डरीकाक्ष ! त्वदेकसाध्यमिदमिति । सर्वोपरि वर्तमानस्य तव विजानन्तोऽपि माहात्म्यं कर्तुमदोषावहमिमं नियोगं प्रोत्साहलक्षणं स्मः प्रवृत्ताः । अयोध्याधिपतेः सुराज्ञो दशरथस्य वदान्यस्य धर्मज्ञस्य महर्षिसमतेजसः स्फुरन्ति हि तिस्रो भार्या ह्रीश्रीकीर्त्युपमा अनुपमाः । सोप[4]करणमात्मानं

1. युक्तिरत्र विनिगमना । 2. श्रियमित्यस्यावृत्त्या वितरतादित्यत्रापि सम्बन्धः । 3. न इति षष्ठ्यन्तं द्वितीयान्तश्च ।
4. "अन्येद्युः पाञ्चजन्यात्मा कैकेय्यां भरतोऽभवत् । तदन्येद्युः सुमित्रायामनन्तात्मा च लक्ष्मणः ॥ 'सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये" । इति पाद्मोक्तेः अत्रात्मानमित्युक्त्या शंखचक्रानन्तानामपि भगवद्रूपता सूचिता । हुंकारेण भगवानिव पाञ्चजन्यः शब्दमात्रेण सकलभुवनक्षोभकत्वाद्विष्णुतुल्य एव ॥

चतुर्विधंकृत्वा दशरथपत्नीष्वासु प्राप्नुहि भगवन्पुत्रतां मानुषरूपेण । वरबलभुजबलाभ्यामवध्यं दैवतैस्सर्वलोकैककण्टकं समरे जहि विष्णो रावणम् । सहि वीर्योत्सेकेन सगन्धर्वान्देवान्सिद्धांश्च साकमृषिसत्तमैर्नित्यं वर्तते बाधमानः । हन्त ! क्रीडन्तीरपि ह्यप्सरसः साकमश्विनन्दनवनं गन्धर्वैर्हिनस्ति दुरात्मातिक्रूरप्रकृतिः । अत एव मुनिभिः सत्यवदनशालैर्वयं सिद्धगन्धर्वयक्षाश्च समायाताः शरणङ्गताश्च । त्वं हि देवानां नः सर्वेषां परमा गतिः । परन्तप ! देवशत्रूणां वधाय रावणरावणिलवणगन्धर्वादीनां, मनः कुर्ववतरितुं नृणां लोके सम्प्रार्थितोऽस्माभिरित्युक्तस्त्रिदशपुङ्गवैर्भगवान्सर्वलोकनमस्कृतः पितामहपुरोगान्स्मयमानमुखाम्बुजः सर्वान्समेतानवोचत धर्मसंहि[2]तान्वचनमच्युतः । भयं त्यजत भद्रमस्तु वः सपुत्रपौत्रं समित्रज्ञातिबान्धवं सामात्यञ्च युधि रावणं क्रूरं दुरात्मानं निहनिष्यामि भयावहं देवर्षीणाम् । सर्वलोकहितार्थमेवं कृत्वा समग्रैः सदाचारैरवितुकामः सर्व धर्मानादर्शो भूत्वा पृथिवीमिमां पालयन्मानुषे लोके वत्स्यामि च दशवर्षसहस्राणि दशवर्षसतानि चेति । एवं देवानामात्मव[3]त्तया प्रसिद्धः स विष्णुर्वितीर्य वरं देवेभ्यः स्वयं चिन्तयामास क्षणं मनुष्येषु यथाज्ञप्तं देवैस्तथा कुत्र जन्माहं प्राप्नवानीति । अनुक्षणमेव स्वानुगुणगुणगणगरिम्णा स्पृहणीयस्य स्मरणमात्रेण दशरथस्य वैनतेयरथस्सन्तोष भरेण विस्फारितनयनकमलः कमलापतिरचकमत पितरं साकेतनाथमात्मानं कृत्वा चतुर्विधमवतरितुम् । ततश्च देवर्षिगन्धर्वाः सरुद्राः साप्सरोणाः प्रमोदमानमानसा अवाङ्मनसगोचरमपि भगवन्तं लक्ष्मीकान्तं दिव्यरूपाभि स्तुष्टुवुः स्तुतिभिः । प्रार्थयामासुश्च, प्रवृद्धदर्पं तपस्विकण्टकमुद्धर दशकन्धरं सबान्धवमागच्छचासदादिभिर्दुर धिगमं, स्वयैव प्रभया देवदानवदुष्प्रेक्ष्यमत्यर्कानलदीप्तमरागद्वेषकल्मषञ्च वैकुण्ठाख्यमात्मनः स्थानमिति निगमयन्तो निगमान्तशुद्धान्तरत्नप्रदीपममृतान्धसो मधुसूदनम् ॥

ततो जानन्नपि स्वयं जनार्दनः सुरसत्तमैर्नियुक्तः पुनस्तस्य राक्षसाधिपतेर्वधे ब्रूत कमप्युपायं, येनाहं समास्थाय निहन्यामृषिकण्टकमित्यब्रूत श्लक्ष्णं देवानां दित्समानो गौरवम् । अज्ञा अल्पज्ञाश्च खलु परस्मै दातुं गौरवं पुरो न भवेयुः दीयमानं वा तद्भवेदकिञ्चित्करम् । महान्तो हि स्वावरेभ्योऽपि स्पृहयन्ति गौरवाधानेन प्रापयितुं समुच्छ्रायम् । इत्थमभिहिताः प्रत्यूचुरच्युतममर्त्या भगवन्तमव्ययं प्रहर्षितात्मानः । तनुमास्थाय मानुषीं संयुगे नारायण ! जहि रावणम् । अरिन्दम ! स हि दीर्घकालं तीव्रं तेपे तपः । तेन च तुष्यति स सर्वलोकसमष्टित्वाल्लोकपूर्वजो "हिरण्यगर्भः समवर्तताग्र" इति श्रुतिप्रतिपादितश्चायं पुरो वर्तमानो ब्रह्मा । सद्यः प्रददौ च वरं राक्षसाय प्रभुर्मा ते भूद्भयं भूतेभ्यो नानाविधेभ्यो मानुषादन्यत्रेति । मनुजनयो ह्यजनिषत सञ्जातदर्पस्यावजिज्ञासिता रक्षःपतेर्यन्नृभ्यो नावृणीतात्मनो मरणं दिष्ट्या तस्मिन्सन्दर्भे । अथ वात्रभवदनुग्रहो भागधेयंवा नः कारणम् । कथमन्यथा देवानप्यस्मानतिशयानान्ययातिमान्धातृदशरथप्रभृतीनुदासीत पिशिताशोऽसौ विजयिनो विश्रुतचरान् । इत्थं पितामहात्प्राप्य वरं दृप्तोऽत्यन्तमुत्सादयति लोकांस्त्रियश्चाप्यपकर्षति । परन्तप । तस्मात्तस्य मानुषेभ्यो वधो दृष्टो भवत्यदुष्टश्चेति ।

---

2. शरणागतिरूपधर्मसंयुतान् ।
3. ब्रह्मविद्रूप रामब्रह्मरूपत्वेन विष्णुस्वरूपादपि श्रेष्ठत्वं ध्वनितम् । नारायणस्यापि राम एवात्मा परं ब्रह्मेति च ।

इत्येतत्सुराणां श्रुत्वा वचनं दृढीकृतात्मनिश्चयश्चक्रपाणिरात्मनः पितरं रोचयामास तदानीं नृपं दशरथम्। स चापि भवत्यपुत्रश्चक्रवर्ती महाद्युतिः परमधार्मिकस्तस्मिन्काले। अरिनिषूदनः स पुत्रेप्सुरयजदिष्टिं पुत्रियाम्। घटमानो भवत्ययं सन्दर्भः पुत्रात्मना मया दशरथे सम्बन्धुमिति निर्धार्य स्वयं नारायणः पितामहमामन्त्र्य च महर्षिभिर्देवैश्च पूज्यमानो यज्ञसदनमध्यमध्यासीनतया दृश्यमानः सन्नपि सद्यस्तिरोऽधित तत्क्षणं कटाक्षेण सम्यगनुगृह्णन्। तस्मिन्नेव यजमानस्यैकाहुतिलक्षणद्रव्यत्यागकाले पावकादाहवनीयादतुलप्रभं महद्भूतं महावीर्यं महाबलं किमपि प्रादुरभवत्। यच्च कृष्णरक्ताम्बरधरं रक्ताक्षं दुन्दुभिस्वनं स्निग्धहर्यक्षतनुजश्मश्रुप्रवरमूर्धजं शुभलक्षणसम्पन्नं शैलशृङ्गसमुत्सेधं दृप्तशार्दूलविक्रमं दिवाकरसमाकारं दीप्तानलशिखोपमं सिंहस्कन्ध महाभुज मङ्गदद्वयशोभितं ताराविकृतकल्पेन हारेणोरसि राजितं ताराधिपतिकल्पैश्च दन्तैः परमशोभितं ज्वलदिव तेजोभिर्दीपयदिव च श्रिया तप्तजाम्बूनदमयैर्भूषणैर्भूषितं च समस्तैरपि सदस्यैर्दशरथेन च राज्ञा समवालोकि सकौतुकं किमेतदिति विस्फारितविलोचनैः।

## ॥ तिरोहितस्यैव भगवतः प्राजापत्यनररूपेण पुनरागमनं पायसदानञ्च ॥

भगवतःशक्तिमिव विश्वम्भरस्य दुर्विभाव्यस्वभावामसम्भावितत्वेनाश्चर्यावहाञ्च सपदि निष्टप्ततपनीयमयीं चक्षुःशक्तिप्रविघातिनीं रजतमयतया राजदुपरिपिधानपात्रमेदुरां प्रेयसीमिव समाश्लेषमर्हन्तीं विपुलतरत्वेन दोर्भ्यां परिग्रहीतुमुचितां दिव्यपायसपरिपूर्णां पात्रीं काञ्चन समादाय यदा वृहदेतद्भूतमुदस्थादस्थाने तदा किन्न्विय स्यात्काचित्कृत्येति नरपतिः साकमविभेदितरैः प्रेक्षितुमपि कातरैः। तदानीं समवेक्ष्य क्षितिपं "प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृपे"ति यावदवोचत तावदेव नरवचनश्रवणेन निर्भयः सन्महीपतिः कृताञ्जलिः "भगवन्स्वागतं ते स्तात्किं करवाणी"ति श्रोत्रप्रीतिकरं वचः प्रायुङ्क्त पङ्क्तिरथः प्रत्युत्तरतया। अथो समगिरत नरोऽपि स प्राजापत्यः राजन्नश्वमेधपुत्रकामेष्टिभ्यामाराधयता देवानद्य भवता श्रद्दधतेदं प्राप्तम्। नरशार्दूल! पायसमिदं निर्मितं विष्णुना परिप्रीणितेन यज्ञेश्वरेण धनवर्धनमारोग्यकरञ्च रूपगुणौदार्याद्यैः काममनुरूपाभ्यस्तव पत्नीभ्यः प्रयच्छ त्वमश्नितेति, तासु च पुत्राँल्लप्स्यसे यदर्थमयजथा दशरथेति। तथेति प्रीतः प्रह्वः शिरसा नरेश्वरः प्रतिगृह्य देवान्नसम्पूर्णां देववितीर्णां हिरण्मयीञ्च तां पात्रीं, तद्भूतमद्भुतं प्रियदर्शनञ्चाभिवाद्य सभक्त्यतिशयं युक्तश्च मुदा परमया चकाराभिप्रदक्षिणमक्षीणप्रभावः। प्राप्य च पायसं तदनुग्रहसर्वस्वमिव मूर्तं भगवतः स्फुरदधन इव वित्तं व्यभादत्यन्तं प्रीतः पृथ्वीपतिः। ततस्तदप्यद्भुताकारं परमभास्वरं भूतं निर्वर्त्य पायसप्रदानरूपं कृत्यमात्मनस्तत्रैवान्तर्दधेऽसौ पश्यतामेव समक्षं सर्वेषाम्। हन्त! शङ्करनारायणहिरण्यगर्भाणामपि प्रत्यगात्मतया प्रकाशमानं मानातीतप्रभावं दिग्देशकालपरिच्छेदरहिततयैव वर्तमानमशेषद्वैतप्रपञ्चोपशमस्वरूपतया शान्तं शिवं सच्चित्सुखात्मकं कंखमित्युपनिषदुद्घुष्यमाणं किमप्यप्राकृतज्योतिःस्वभावमवाङ्मनसविषयः परमेव साक्षाद्ब्रह्म रामात्मना प्रादुर्भविष्य

त्यध्ययोध्यमीश्वराणामपीश्वरेण केनापि पुण्यश्लोकेनाभूतपूर्वमहिमसमभ्युन्नतेन लोककल्याणकलनाय करुणया स्वीकृतमानुषवेषेणेति भगवानेवान्तर्हितः तत्तेजस्सम्भृतपायसमादाय हुताग्नेः सकाशात्प्रादुर्भवति स्म परब्रह्मणैवाहिता परिमितशक्तिसम्पन्नः समनुजिघृक्षन्नधोक्षजः क्षोणीनायकम् । नह्यन्यस्य तत्तेजोधारणे शक्तिसम्भावनाप्यस्ति । अत एव महता भूतात्मना प्रादुर्भावः । एको विष्णुर्महद्भूतमिति हि भवत्युक्तिः । अहो ! परा काष्ठा पङ्क्तिरथ पारम्यस्य यच्चतुर्दशानामपि भुवनानामेकनायकतया जनिष्यमाणस्य श्रीमद्रामब्रह्मणोऽपि नारायणस्यापि परमसाराय माणस्य शङ्करस्यापि निरतिशयं शङ्करस्य पितृभावमुपगन्तुमन्वग्राहि राजा समग्रं महाविष्णुद्वारेति ।

## ॥ पायसप्रदानम् ॥

तदानीं राजेन्दुमुत्पश्यता हर्षपीयूषोत्किरं सद्योविकासिना च बभूवेऽन्तःपुरस्त्रैणमुखकुवलयव्यूहेन दिव्य पायसहस्तं प्रशस्तम् । भगवदनुग्रहलाभेन शारदस्यांशुभिरुद्योतितमिव नभश्चन्द्रमसः शुद्धान्तं प्रविश्य शुद्धान्तरात्मा दशरथः पत्रिपरिवृढरथपुरुकृपाभाजनतया भ्राजमानः पायसममृतादप्यतिमधुरं नैकजनिकृतसुकृतजातमिव किमपि परिपाकवशात्प्रदातुं फलं वपुष्मद्धस्ततलमापतितं फुल्लायतेक्षणाभ्यस्स्वमहिषीभ्यः प्रविभज्य प्रदातुं तिसृभ्यः समुप चक्रमे यथाक्रमं चक्रवर्ती । तत्र प्रथमतः कौसल्यायै नरपतिः पायसस्यार्धमदित मुदितोऽत्यन्तं ज्येष्ठपत्न्यै तदनु प्रणयाद्द्विगुणितमाधुर्यस्य तस्यावशिष्टं विशिष्टविज्ञानोऽर्धं केकयराजतनुजायै । तदानीं बहुविदः पत्युराशयज्ञे उभे अपि ते स्वस्वभागचतुर्थांशाभ्यां मकुर्वातां[1] परिपूर्णकामां सुमित्रामाज्ञामनुरुध्य पृथिवीनाथस्य । पातिव्रत्यप्रभावा त्सिद्धसार्वज्ञ्या त्यागैकप्रकृतिः प्रकृतिसिद्धज्ञानवैराग्या सौभाग्यवती सुमित्रा च सतीभ्यां ताभ्यामेवमवाप्य सम्भावनां सम्भावनीयस्य पुरस्ताद्भर्तुः परां कोटिमाटीकत परमानन्दस्य । एवं दानदापनाभ्यां तिस्रोऽपि मानयित्वा पत्नीः सतीः स्वाः प्रजहर्ष भृशं पृथिवीनाथः । ततश्च ताः प्राश्य तदुत्तमस्त्रियः पृथङ्महीपतेरुत्तमपायसं गर्भांश्चा चिरेण तदा प्रतिपेदिरे हुताशनादित्यसमानते[2]जसस्तिस्रोऽपि । प्रतिवीक्ष्य च ताः प्ररूढगर्भाः स्त्रियश्चक्रवर्ती प्रतिलब्धमानसः समस्फुरत्प्रहृष्टः कृतकृत्यतया त्रिविष्टप इव तुराषाट्सुरसिद्धमहर्षीणामभिष्टुतः सङ्घैः ।

---

1. रामभरतौ प्रत्येकं त्र्यंशौ लक्ष्मणशत्रुघ्नौ चाष्टमांशौ । अत एव लक्ष्मणस्य रामानुवर्तित्वं शत्रुघ्नस्य च रामान्यून प्रभावभरतानुवर्तित्वञ्च । उक्तञ्च पाद्मे—

> " युगं बभूवतुस्तत्र सुस्निग्धौ रामलक्ष्मणौ ।
> तथा भरतशत्रुघ्नौ पायसांशवशात्स्वतः ॥" इति ॥

2. इदं गर्भाणां स्त्रीणाञ्चावृत्त्या विशेषणम् ।

# ॥ देवगन्धर्वादिभिर्ब्रह्माज्ञया रामसाहाय्यार्थं मृक्षवानरादिभावेन भुव्यवतरणम् ॥

लोकपितामहस्यापि पितरि विष्टरश्रवसि यथाप्रतिश्रवमुपगन्तुं प्रवृत्ते पुत्रभावं भाविकार्यज्ञो भगवान्स्वयम्भूः ऋभुवरान्समगिरत । विबुधाः ! सत्यसन्धः शौर्यजलधिरमिततेजा वो रक्षिष्यत्यधोक्षजः । स्वाभाविकज्ञानबलक्रियस्य च चक्रिणः सर्वशक्तस्य यद्यपि न कापि सहायापेक्षा तथापि केवलमुपकरणप्रायैरवश्यकार्यं भवति युष्माभिः कार्तज्ञ्यनिवेदनं जनिसाफल्यमभीप्सुभिरिति भगवत्कैङ्कर्यलाभलोभाविष्टस्य मम समस्त्याशयः ।

किञ्चर्ते परमेश्वराहिताया अपि नाम पृथगस्ति कापि शक्तिरस्माकं सतां सूत्रप्रतिमायमानानाञ्जीवात्मनाम् । तमाराद्धुकामास्तामेव वयं [1]पुरोपहारीकुर्महे । न हि पूजयितुं समुद्रराजमर्घ्यपाद्याचमनीयाद्यर्थमन्विष्य कश्चिद्गच्छति तीर्थान्तरम् । विना नारायणेन जीवितादप्यभ्यधिकेन निरवधिकदयाशेवधिना न किमपि सर्वस्वमुत्स्फुरति नः समेषाम् । आत्मार्पणान्नापि काप्यभ्यर्हिता भक्तिः । अजनिष्महि वयं परमेश्वरपरमानुग्रहैकभाजनानि । कथमन्यथा महामरौ ग्रीष्मे च भीष्मे तप्ततप्तानामुपरि परिगर्जन्प्रत्यग्र इव कोऽपि जीमूतः पुरतोऽस्माकमात्मानं प्रादुर्भावयन्विदध्यादनुग्रहमिन्दीवरदलमनोहरविग्रहोऽयमिन्दिरानन्दवर्धनः ।

अभ्युदयसमुदयैकहेतुर्ह्यभ्यर्ह्यते मर्त्यलोकेऽवतारस्तत्रापि भारते । दिविषदामपि सतां युष्माकं यदवतीर्णः क्रियातमभिहारेण चक्रपाणिरपि । भगवद्भक्तिकल्पलतिकासमालिङ्गितश्च ज्ञानामरद्रुमो यथा मध्यमलोके फलति न तथेतरत्रेति लेखा यूयं निभालयत । येनात्मना जगद्रक्षको यदधितिष्ठति भगवान्वैकुण्ठः स एव खलु भवत्यदसीयोऽपि लोकः । मानुष्यकसमुन्निनीषयैव समुद्भविष्यन्मनुवंशकेतुस्वरूपेण नारागणाख्यं निरुपाख्यं किमपि परं ब्रह्मैव स्वयं सुरभीकरिष्यति पुष्पमिव स्वानुगतं तन्तुमस्माकमपि निकायम् । अतः स्वात्मानं कृतार्थयध्वमद्यान्यस्मिन्परमात्मनो नाममात्रेण सहायसमुत्पादनात्मनि सप्रमोदं कृतपदाः । अतो मुख्यास्वप्सरःसु तनूषु च गन्धर्वीणामृक्षविद्याधरीषु यक्षपन्नगकन्यासु गात्रेषु च किन्नरीणां तनूषु च वानरीणामाश्चर्यशक्तिसम्पन्नाञ्जवे समीरसमाञ्शूरान्नयज्ञान्परैरसंहार्यानागतविधानज्ञान्सिद्धसंहननान्वितान्सर्वास्त्रगुणसम्पन्नान्पीतामृतानिव मृत्युरहितान्स्वतुल्यपराक्रमांश्च हरिरूपेण पुत्रान्सृजत भो निर्जरा यूयं जाग्रति पार्वतीशापेन स्वक्षेत्रेषु पुत्रोत्पादनासम्भवेऽपि, पुत्राणां वानररूपोपलक्षितत्वेन च ।

"तस्मान्मद्रूपसंयुक्ता मद्वीर्यसमतेजसः ।
उत्पत्स्यन्ते वधार्थं हि कुलस्य तव वानराः ॥"

इति दिग्वजये रावणं प्रति यदुक्तं नन्दिकेश्वरेण तस्य शापस्याप्यनुसारः कृतो भवति । भाविभगवत्सहायबुद्ध्या पूर्वमेवाहमजनयं जाम्बवन्तमृक्षपुङ्गवं यो जृम्भमाणस्य मम वक्त्रदजायत तेजसामेकपुञ्ज इव सलँक्ष्यमाण इति।

1. यावत्पुरनिषादयोरिति सूत्र

अङ्गीकृत्य च भगवतः कमलासनस्य शासनं वानररूपिणः पुत्रांस्ते जनयामासुः ऋषयः सिद्धविद्याधरोरगाश्च सह चारणैरसाधारणान्पराक्रमादिभिः। पूर्वमेव समुत्पादितो मरुत्वता महेन्द्रपर्वताभः संहत्य स्थित इव सर्वःपराक्रमो वाली तथा तपतां वरस्तपनेन सुग्रीवश्च। अङ्गदोत्पादनद्वारा वालिनश्च विलसिष्यति साहाय्यकरणम्। सर्वेषु च वानरमुख्येषु बुद्धिमन्तमनुत्तमञ्च स्वानुगुण्यादजनयत्तारं नाम बृहस्पतिर्महाहरिम्। धनदस्य च व्यराजत श्रीमान्गन्धमादनो नाम हरिरात्मजः। उदपादयच्च सर्वकार्यनिर्माणदक्षं नलं नाम वानरं विश्वकर्मा। तेजसा यशसा वीर्येण च सर्वानपि वानरानतिशयानः श्रीमानग्निसदृशप्रभो व्यभात्सुतः पावकस्य नीलो नाम। रूपद्रवि[1]णसम्पन्नौ चाश्विनावसृजतां मनसैव मैन्दद्विविदौ द्वावपि रूपसम्मतौ। वरुणः [2]सुषेणं पर्जन्यो नाम वर्षाभिमानिदेवता च शरभं नाम महाबलं जनयामासतुर्वानरम्। कैङ्कर्यैकरसिको निष्कारणभक्तिदृढरज्ज्वा बद्धा भगवन्तमात्मसात्कर्तुं प्रभविष्णुरभूतमभविष्यदवाङ्मनविषयश्च यत्तेजः पराक्रमादि तस्य मुख्यमायतनमखिलकार्यनिर्वाहधुरन्धरः सर्वातिशायियशोभास्वरो महेश्वरस्य नन्दीव गरुड इव महाविष्णोरात्मनश्चेतो[3]धातुरिव च सदा देदीप्यमानो भगवच्छब्दस्याप्यभिधेयताङ्गतः पुत्रात्मना प्रादुरास हनुमान्नाम वानरोत्तमः परमभाग्यवशान्मारुतस्य निरुपममहिमैकनिकेतनस्य। अप्रमेयबला वीरा विक्रान्ताः कामरूपिणश्चेमे बहवः सहस्रं व्यसृजन्तां वानरारता वधे दशकन्धरस्य। तथा दृढवपुष्कतया मेरुमन्दरसङ्काशा महाबलाश्च जज्ञिरे क्षिप्रमेवर्क्षा गोपुच्छाश्च। प्रमोदादित्थमुदपीपदंश्चात्मजान्सहस्रशो देवा महर्षयो गन्धर्वास्ताक्ष्र्या यक्षाः किम्पुरुषाः सिद्धविद्याधरोरगा नागाश्च निदेशमनुरुन्धाना भगवतो ब्रह्मणः। कामरूपबलोपेता विचारिणश्च यथेच्छं दर्पेण बलेन च निस्तुलेन विलेसुः सिंहशार्दूलसदृशाः। सर्व एवैते शिलाप्रहरणाः पादपयोधिनः सर्वास्त्रकोविदा नखदंष्ट्रायुधा यथा विचालयेयुः शैलेन्द्रान्भेदयेयुः स्थिरान्द्रुमाञ्जवेन जलधिमपि क्षोभयेयुः क्षितिं दारयेयुराप्लवेयुर्महार्णवं विशेयुश्च नभःस्थलं गृह्णीयुरपि तोयदान्द्रावयेयुर्वनमदगजान्नादमात्रेण पातयेयुश्च विहङ्गमांस्तथा समुदैक्ष्यन्ताक्षीणस्वामिभक्तिसम्पत्समृद्धाः।

केचिद्यूथपा ऋक्षवन्नाम्नः पर्वतस्य प्रस्थानुपतस्थुः सहस्रशः। अपरे तु नानाविधान्क्षितिधरान्काननानि च पुष्कलफलशालीनि। अगण्येतां गुणैरुदारैर्भ्रातराविति सम्भावितौ वानरर्षभैर्वाली सुग्रीवश्च राजा युवराज इति प्रख्यायमानौ। नलो नीलो हनुमानित्यादयश्च व्यद्युतन्मन्त्रिणः। विपुलविक्रमो महाबाहुश्च वाली निजभुजवीर्येण जुगोपतरामृक्षगोपुच्छवानरांस्ताक्ष्र्यबलसम्पन्नान्युद्धविशारदान्दर्पादर्दयतश्च सिंहव्याघ्रमहोरगान्। इत्थं सपर्वतवनार्णवा कीर्णात्यन्तमस्फुरत्क्षोणी विविधसंस्थानैर्नैकव्यञ्जनलक्षणैर्मेघबृन्दाचलकूटकल्पैर्भीमशरीररूपै रामसहायहेतोर्महाबलैर्वानरयूथपालैरलमाकल्पिता च॥

---

1. रूपमेवद्रविणं तेन संपन्नौ।

2. धर्मपुत्रोपरः सुषेण इति युद्धकाण्डे वक्ष्यति अत्रतूक्तो वरुणपुत्रः।

3. चेतः पदार्थः

# ॥ श्रीरामजननम् ॥

निर्वृत्ते च महात्मनः क्रतावश्वमेधे सह पुत्रीयेष्ट्या हन्त ! निरुपमः स्वादिमेदृशः किंस्विदुपलभ्येत नित्य सिद्धायां नःसुधायां पयसि वा कामपयस्विन्याः फले वा कल्पवृक्षस्य सरसनीरे वा सुरस्रोतस्विन्या अधरमधुनि वा स्वर्वारपुरन्ध्रीणामिति परीक्षितुमिव प्रतिगृह्य स्वस्वहविर्भागान्क्रतुभुजः [1]प्रतिजग्मुर्यथागतम् । राजापि समाप्त दीक्षानियमः समन्वितः साध्वीनां गणैः पत्नीनां सभृत्यबलवाहनश्च पुरीमुपचक्रमे प्रवेष्टुम् । राजानश्च यथार्हं सभाजिताश्चक्रवर्तिना प्रमोमुच्यमानाः प्रणम्य मुनिश्रेष्ठं वसिष्ठं प्रययुः स्वान्देशान् । तेषां च बलानि प्रहृष्टानि दशरथदत्तवस्त्राभरणाद्यैः प्रचकाशिरे जाज्वल्यमानानि । तृप्तिमतः प्रस्थाप्य पार्थिवान्पार्थिवर्षभः पुरस्कृत्य श्रीमान रुन्धतीजानिमुखान्द्विजोत्तमान्पुरीं प्रविवेश स्वां द्युतिमतीम् । महिमसमुत्तुङ्गोऽसावृश्यशृङ्गश्च प्रातिस्विकरूपेण सुपूजितः सार्धं शान्तया पातिव्रत्यैकरत्नप्रदीपिकया प्रययावन्वीयमानः सभृत्येन रोमपादेन । एवं सर्वांस्तान्विसृज्य यथायथं राजापि सम्पूर्णमनोरथो दशरथः सुखितः सन्नुवास निश्चितां प्रतीक्षमाणः पुत्रोत्पत्तिम् । न हि श्रौता धर्मा वा स्मार्ता भवन्ति फलव्यभिचारिणो यथाविधानमनुष्ठीयमानाः । जडिमा च मनुष्येषु, न पद्धत्या वैध्या सश्रद्धमाराध्यमानेषु दैवेषु । अदृष्टपूर्वज्योतिःपुञ्जायमानाः शुक्लपक्षचन्द्रप्रभावदुपचीयमाना विदधतश्च महिषीरसमसुषमासमुन्मेषा गर्भा व्यभांश्चक्रवर्तिनेत्रमहोत्सवायमानतया प्रतिक्षणमानन्ददायिनः ॥

अश्वमेधसमाप्त्यपेक्षया पायसोपयोगाद्वा द्वादशे मासे पौर्णमास्या च सुभगे चैत्रे नवम्यां तिथौ पुनर्वस्वोरदिति देवतयोः स्वोच्चस्थानस्थितिमत्सु च सूर्यगुरुशुक्राङ्गारकशनिषु राश्युदये च कर्कटाख्ये वाक्पतौ सहेन्दुनोदयमाने पूषणि च मेषं प्रविष्टे जगन्नाथमजीजनत्सर्वलोकनमस्कृतं सकलसामुद्रिकलक्षणं कोमलदूर्वादलश्यामलमैक्ष्वाकस्य संवर्धनमनवध्यभ्युदयप्रदानेन दशरथस्य सकलसौभाग्यैकनिलयायमाना कमलालयेव समुल्लसन्ती [2]कौसल्या विष्णोरर्धं[3] महाभागं सर्वाभिरामदातारं भगवन्तं श्रीरामम् । यः सच्चिदानन्दलक्षणोऽपि विलक्षणं किमपि रूपमास्थाय लीलया लसति लोकमोहनः, यश्च जातवप्यजायमानं सत्तास्फुरणयोर्वितरणेन समनुगृह्णन्तमुपजीव्य बहुधा विजायते जगत्याञ्ज नार्दनः, येन बौद्धप्रत्ययानां साक्षिभूतेनैकेन प्रत्यगात्मना स्फुरन्ति जीवेश्वरादीनि जगन्ति तन्तुनेव ग्रथितानि पुष्पाणि, यस्मायनारतमात्मारामाः समाधावुपलभमानाः प्रत्यग्ज्योतीरूपतया योगिनः स्पृहयन्ति समे महात्मानः, यस्माच यक्षरूपेण प्रत्यक्षं प्रादुर्भूय परीक्ष्य च परिहृतवतो गर्वमखर्वं जातवेदःप्रभृतीनां, हैमवतीमुखेन च प्रकाश्य स्वं महिमान मसीमानमसमानमनुगृहीतवतः पुरुहूतं, कृपया [4]समुपदिष्टवतश्च देवासुरमनुष्येभ्यस्त्रिर्ददेति दमदयादानानां महा भूतात्मना पारम्यं, जीवेश्वरेभ्यः सर्वेभ्योऽप्यभयं प्रदातुं प्रभविष्णोरौपनिषदादेकस्मात्परस्मात्पुरुषाद्बिभ्यतः स्वस्वाधिकार निर्वाहेऽजस्रं जाग्रति निर्जरा अपि वाय्वर्काग्निशक्रमृत्युप्रभृतयः, यस्य पुराणपुरुषस्य सौशील्यादिगुणगणैरनणु

---

1. भागप्रतिग्रहार्थं समवेत्य ब्रह्मसदसि गत्वा कार्यं विज्ञाप्य ततोऽश्वमेधभागान्गृहीत्वा गतादेवा इति सर्वं समञ्जसम् । एतावद्वृत्तान्तकालस्य देवमानेनाल्पत्वेऽपि मनुष्यमानेन बहुवर्षागता रेवतीवरप्रार्थनावदिति गोविन्दराजः ॥

2. शङ्खचक्रानन्तविशिष्टस्य विष्णोरित्यर्थः 3. अर्धं किञ्चिन्न्यूनमर्धमित्यर्थः शङ्खचक्रादेरभावादिति भावः ॥

4. अभूतार्थप्रतिपादिकयाप्युपनिषदाख्यायिकया ब्रह्मप्राशस्त्यप्रतिपादनं न विरुध्यते ॥

गरिम्णश्च पूर्णकामस्यापि सतः सदाचाराणामाचरणेऽसाधारणः कोऽपि परिस्फुरत्यादर्शभावोपगमः समादरभर लोकक्षेमाय परमाश्चर्यकरः, यस्मिंश्च समुद्रे नदीनदसमुदया इव समनुयन्त्यैकमत्येन श्रुतिस्मृतिपुराणोपपुराणेतिहासा अपि समस्तास्तमेतमाप्त्वा पुत्रं पवित्रं, वज्रपाणिनेवादितिः शुशुभे कामं कौसल्यासावपांसुला। "परमात्मा न राक्नुति"रिति सत्यापयितुमागमं कृतमर्त्यावतारं नित्यद्विभुजमपि चतुर्भुजादीनामप्यन्तरात्मानं समस्तजगतामधीश मपि साकेतनाथतया प्राप्तप्रादुर्भावं ब्रह्मविष्णुरुद्राणामीश्वरमीश्वराणामपि स्वयमणोरणीयांसं महतो महीयांसमा त्मानमेकं सर्वप्राणभृतामपास्तसङ्कल्पैर्वीतशोकैश्च महात्मभिः बुद्धिगुहायां परमेश्वरप्रसादात्समनुभवनीयं भजनीयञ्च स्तोमैर्भक्तानां विरक्तिमतामसारे संसारे समभ्युपगम्य स्वयम्भूप्रभृतयः मूर्तिमत्यश्च श्रुतयः सहस्मृतिभिरश्विसूतिकासदन मन्तर्हिताः पुराणपुरुषमस्ताविषुरौपनिषदं हर्षोन्मेषेण। देवर्षयश्च नारदाद्याः साकं ब्रह्मर्षिभिरुपसद्य वासुदेवं "आदि[1]नारायणः श्रीरामरूपेण जायमानः सुन्दरतया प्रतिक्षणं नवनवतया प्रेक्षणीयश्चकास्ति। रामचन्द्र इति हि व्यपदेशोऽयमसामान्यः प्रेक्षणीयतायाः प्राह किमप्यतिशयिततमत्वम्। यानि दिनानि श्रीरघुनायकोपासनयो पयान्ति तान्येव विशिष्टानीत्यतो दिनानां केतुरिव स विशेषको भवति। श्रीरामस्वामिस्वरूपेण ब्राह्ममुहूर्तं प्राप्नोति चिन्तनीयत्वेन। जायमानश्च देवेभ्यो यज्ञभागं स च करोति रावणादिकृतप्रतिबन्धविरहितं गतः परमकृपा कूपारताम्। स्मृतिमागच्छंश्च निजभक्तानामायुः सुदीर्घं सम्पदश्च ददाति परमोदारप्रकृतिरित्यर्थप्रकाशिकया "नवो नवो भवति जायमानोऽह्नांकेतुरुषसामेत्यग्रे भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरति दीर्घमायुः" इत्यादिश्रुत्या समुपनिषद्भिरशेषाभिर्निर्गुणतत्त्वप्रतिपादिनीभिः "रामतत्त्वं विजानाति हनुमानथ लक्ष्मणः। तद्विमर्शे तु का शक्तिरितरस्य च कस्यचित्॥" इत्यादिपुराणोपबृंहणरमणीयैश्च भणितैरस्तोषततरां सन्तोषिताः। जगत्प्रकाशकादित्यकुलैकमणिप्रदीपः प्रादुर्भावसमये स कृपया कोसलेन्द्रदुहित्रे प्रददौ मात्रे सर्वलोकात्मनः स्वस्य विराड्रूपस्य दिव्यचक्षुर्विश्राणनद्वारेण दर्शनमनुपदञ्च तद्रूपदर्शनविस्मयात्तया नमस्कृतः प्रार्थितश्च संश्रक्तितया दधौ बालभावमात्मीयया मायया। स च बालोऽप्युल्ललास निखिलपलाशपलालजालसमूलोन्मूलनैकलालसः कोऽपि जाज्वल्यमानः कालानलः। व्यद्योतत च तपस्विचेतश्चातकानां मेचकः कोऽपि जीमूतः। अजननोऽपि विश्व जननः स्वयमरूपोऽपि सौन्दर्यैकनिकेतनो हेपयन्रूपधेयेन मीनकेतनमयुवापि युवतिचेतश्चकोरैकचन्द्रमा अमनुष्योऽपि मानुष्यकमनोज्ञोऽनीश्वरोऽपीश्वराणामीश्वरः श्रुत्यविषयोऽपि श्रुत्यन्तविश्रान्तद्वगात्मना देदीप्यमानो निष्प्रपञ्चोऽपि सर्वप्रपञ्चसारस्वरूपः परां दीप्तिं कामप्यापद्यमानः परिवृतेन प्रभामण्डलेन मार्तण्डानां न्यग्भवन्सहस्राणि विद्युतां च न्यक्कुर्वंस्तर्तिं निघ्नंश्च दृक्छक्तिमुत्पश्यतां किमेतदित्याश्चर्यातिशयवशादप्राकृतदिव्यमङ्गलविग्रहः किञ्चिदुन्मीलित लोचनकमलाभ्यां कमलालयाभ्यां कारुण्यकल्लोलमालासमाकुलाभ्यां जातमात्रोऽपि समन्वग्रहीत्सर्वानप्येष पुरुषो त्तमः। समनन्तरञ्च समस्तैर्गुणैः श्रीरामसम्बन्धितया प्रशस्तैश्च समन्वितः सर्वांश[2] एव स साक्षाद्भगवान्विष्णुः सत्य पराक्रमः कैकेय्यां जज्ञे भरतात्मना।

---

1. आदिनारायणः=नारायणस्याप्यादिरिति निर्गुणमुच्यते ब्रह्म॥

2. श्रीमद्रामायणे "साक्षाद्विष्णोश्चतुर्भागः" इति वर्तते तत्र, चत्वारो भागा यस्मिन्सर्वांश इत्यर्थः। विष्णोरिति षष्ठी च राहोः शिरइतिवदेवञ्च साक्षाद्विष्णुरेवेत्यर्थः। एवमन्यत्रापि कार्यं नयनम्।

[ "वैकुण्ठेशस्तु भरतः क्षीराब्धीशश्च लक्ष्मणः। शत्रुघ्नस्तु स्वयम्भूमा रामसेवार्थमागताः ॥"

इति नारदपञ्चरात्रोक्त्या भरतादीनामपि त्रयाणां साक्षाद्विष्णुस्वरूपत्वं तैरुपास्यमानतया च श्रीरामभद्रस्य परब्रह्मत्वञ्च स्पष्टं भवति श्रुतियुक्त्यनुभूतियुक्तमुक्तम्। प्राहुरपि—

"अकाराक्षरसम्भूतः सौमित्रिर्विश्वभावनः।
उकाराक्षरसम्भूतः शत्रुघ्नस्तैजसात्मकः ॥
प्राज्ञात्मकस्तु भरतो मकाराक्षरसम्भवः।
अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ॥"

इति। प्रजापतिप्रेषितपायसन्तु नित्यसिद्धचिदानन्दे नोपादानभावमर्हति। अपि तु भगवदाविर्भावसूचनेन दशरथमनुगृह्णाति परमिति सम्प्रदायविदः ॥ ]

अथो अजनयद्वीरौ विष्णोरर्धसमन्वितौ सुतौ सर्वास्त्रकुशलौ महाभागा सुमित्रापि लक्ष्मणशत्रुघ्नौ। [ एतौ च श्रीरामलक्ष्मणौ पुराणपुरुषावेव मायाभिधस्वशक्त्या दशरथराजकुमारौ भूत्वा विश्वामित्रस्य यज्ञमनेकरक्षोविक्षिप्तं प्राप्तौ रक्षणाय। ताटकासुबाह्वादिवधप्रमुखक्रीडासक्तौ। प्राप्तौचाग्रजत्वमनुजत्वञ्च। तयोरन्यः श्रीरामः स्वाध्यस्तविश्वप्रकाशहेतुतया सर्वाणि प्रकाशयति भुवनानि। शेषावतारत्वात्कालात्मको लक्ष्मणोऽन्यश्च कालस्यानाद्यनन्तक्षणधाराप्रवाहरूपस्य वसन्तप्रमुखर्तुकारणत्वादृतून्विदधद्यदा यदा रामो भवति जातस्तदा तदा तमनुसृत्य पुनःपुनर्जायत इत्यमुमर्थं

"पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम्।
विश्वान्यन्यो भुवनाऽभिचष्टऋतूनन्यो विदधज्जायते पुनः ॥"

इति श्रुतिः, "योऽयं कालो मया ख्यातः सोऽनन्त" इति पुराणञ्चेत्येतदुभयमनुगृहीतञ्च "लोकवत्तुलीलाकैवल्य"मिति न्यायेन सम्यक्स्फोरयितुं भवति समर्थममीषां परां काष्ठां महात्म्यस्यावताराणां प्रतियुगं धर्मसंस्थापनार्थमावृत्तिमतां लोकभद्रङ्कराणामिति पूर्णेषु तेष्वेतेषु यथापुरुषबुद्धि, कल्पनाप्यंशांशिभावस्य सुतरामसम्भविनी भवति हासास्पदञ्चेति निर्णय एष रामतत्त्वं विदुषाम् ॥]

पुष्यनक्षत्रयुक्ततिथौ मीनलग्ने च जातः प्रसन्नधीरिन्द्रे स भरतः। आश्लेषानक्षत्रे च [1]सार्पे कर्कटके रवौ चाभ्यु[2]दिते सौमित्री अजायेतां स्वनक्षत्रदेवतानुगुणगुणौ। चत्वारश्च महात्मानः पुत्रा इमे चक्रवर्तिनः काममनुरूपाः प्रत्येकमनन्य[3]साधारणगुणाः प्रोष्ठ[4]पदसध्रीचीनाश्च रुच्या जज्ञिरे चातुर्विध्यमवस्थाभेदेनैव समुपगमिता अपरिमितविचित्रशक्तिसमुद्भाजिता जात्वप्यपराजितात्मानः ॥

---

1. "आश्लेषानक्षत्रं सर्पदेवता" इति श्रुतिः 2. भरतजननस्योदयात्पूर्वत्वज्ञापनायात्रोदित इति ॥

3. रामस्य सामान्यधर्मरुचिः, लक्ष्मणस्य शेषत्वज्ञानं, भरतस्य भगवत्पारतन्त्र्यधीः, शत्रुघ्नस्य भागवतपारतन्त्र्यमिति परस्परविलक्षणगुणवन्त इत्यर्थ इति गोविन्दराजः

4 प्रोष्ठपदेति पूर्वभाद्रपदयोर्नाम। तयोश्च प्रत्येकं द्वेद्वेतारे इति ज्योतिः शास्त्रप्रसिद्धम्। तैत्तरीयश्रुतिरपि "चत्वारएकमभिकर्मदेवाः प्रोष्ठपदास इतियां वदन्ती"ति ॥

तदानीञ्चाव्यक्तमधुरञ्जगुर्गन्धर्वा ननृतुश्चोच्चैस्तरामप्सरसः स्वैरतुलैर्लीलाविलसैर्नेदुश्च देवानां दुन्दुभयः स्निग्धगम्भीरं परिमलमिलदलिकुलकोलाहलसमाकुलं वर्षश्च पुष्पाणामनिमिषाणां महर्षीणां सिद्धानाञ्च समर्पितश्च हस्तैरपसदधिजनिगृहाभ्यन्तरम् । अयोध्यायाञ्च प्रतिसदनमभूदुत्सवो महाञ्जनाकुलः । राजरथ्याश्च जनसम्बाधा नटनर्तकसङ्कुलाः समुदलसन्गायकैर्वाद्यशिल्पैरपरैर्विराविण्यः सूतमागधवन्दिसन्दोहैरविरतम् । तदानीं प्रहर्षात्पारितोषिकान्सूताख्येभ्यः पौराणिकेभ्यो मागधनामभ्यो वंशावलिकीर्तकेभ्यः स्तुतिपाठकेभ्यश्च वन्दिशब्दशब्दितेभ्यः प्रविततार मनस्विनां वरः पृथ्वीश्वरः परिमितेतरैर्वित्तैः साकं गोधनानि सहस्रशः पृथिवीसुरेभ्यः श्रुतिपारगेभ्यश्च । यतोऽन्यत्र पुण्यकालो न भवत्युत्सवकालः, उत्सवकालश्च न पुण्यकालः पुण्योत्सवोभयात्मकः खलु भवति पुत्रोत्पत्तिकालः । व्यासोऽप्याह—

"देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यञ्च सर्वदा ॥

तत्र दद्यात्सुवर्णञ्च भूमिं गां तुरगं रथम् ।
छत्रञ्च गन्धमाल्यञ्च शयनञ्चासनं गृहमि"ति ॥

यथाविधि चरितसचेलस्नानो वसुमतीनाथस्तदा जातकर्म निर्वर्तयन्श्राद्धमाभ्युदयं च ब्राह्मणेभ्यो गवादि धर्मार्थमुत्सवप्रयुक्ततया बान्धवेभ्यः प्रियशंसिभ्यश्च जनेभ्यः प्रीत्यर्थं नटनर्तकेभ्यश्च यशोर्थं प्रददौ श्रौतस्मार्तोत्सवयोग्यः पुत्रोत्पत्तिदिवससदृशोऽन्यो नास्ति लभ्यः कोऽपि सन्दर्भ इत्यभिसन्दधानः, पारत्रिकफलकं धर्ममैहिकमात्रप्रयोजनमर्थञ्चापेक्ष्य पवित्रसन्ततेरुभयत्र शर्मप्रदायकत्वञ्च निश्चिन्वानः शास्त्रार्थविदामग्रेसरः सूचयन्नितरैरपि पुत्रजन्मन्येवमाचरणीयोऽयं धर्म इति ॥ रामजन्मतस्त्रयोदशे च दिने नामकरणमकरोद्वसिष्ठद्वारा क्षत्रियत्वेन स्वस्याधिकाराभावमभि[1]मन्यमानो दशरथः । परमप्रीतस्त्रिकालज्ञानां श्रेष्ठो वसिष्ठश्च रमन्ते योगिनो जनाश्च सर्वे तथेश्वरादयो गुणैरस्मिन्निति व्युत्पत्तिमभिप्रयञ्ज्येष्ठं पुत्रं सच्चित्सुखात्मकतया प्रशस्तञ्च सन्तं राम इति, राजनि मृते रामे च वनं गतेऽराजकराज्यभरणात्कैकेय्याः सुतं भरत इति, रामकैङ्कर्यलक्षणलक्ष्मीवत्त्वेनासाधारणशोभावत्त्वेन च सुमित्रायाः पुत्रं लक्ष्मण इति, शत्रून्हन्तीति सौमित्रमपरं शत्रुघ्न इति च स्वयमाह्वयन् क्रमेण चतुर्णामेषां कृतवान्नामानि । तथा राजाज्ञया पौरजानपदान्भोजयमानो द्विजान्वसिष्ठस्तेभ्यो बहुममितञ्च रत्नौघमदीदपच्च धर्मविदां वरिष्ठस्तथा जातकर्मनामकरणवदन्यान्यपि कर्माण्यकारयदन्नप्राशनचौलोपनयनादीनि सर्वाणि यथाशास्त्रप्रक्रियम् । तेषां च मध्ये चतुर्णां वयसा ज्येष्ठो रामो ध्वज इव रराज निजकुलप्रकाशकः पितुर्भूयस्तरां सन्तोषकरः स्वयम्भूरिव भूतानां नित्यञ्च परमप्रेमास्पदम् । प्रचकाशिरे च ते सर्वेऽप्यधिगतनिखिलनिगमागमतदर्थदिव्यविज्ञाना असकृदभ्यासवशात्स्वायत्तसमस्तधनुर्विद्याः कृत्वा नित्यं सखीः स्वात्ममतीनां प्रभवन्तश्च लोकानां हितकरणे सततं व्याप्रियमाणा ज्ञानकार्यगुणसम्पत्त्यात्यन्तं विद्योतमानतया सतां सम्मताः संस्कृतात्मानः । सत्यापयाम्बभूवुश्चाभियुक्तनामुक्तिं "गुरुस्तु विद्याधिगमाय सेव्यते श्रुता च विद्या मतये महात्मनाम् । श्रुतानुवर्तीनि मतानि वेधसामसंशयं साधु भवन्ति

---

1. क्षत्रियस्य नामकरणे नाधिकार इत्यत्र मूलं मृग्यम् ।

भूतये ॥" इति । राज्ञामत्यावश्यकमेतदचकात्तरां चतुर्ष्वपि तेषु चतुरेषु चतुष्टयं विद्याधिगमो वृद्धोपसेवनं नीतिवर्त्मानुसारित्वं विनयोपपन्नत्वञ्चेति । महाप्रतापस्त्वमोघवीर्यः शत्रुसम्पद्विरामोऽयं रामः सन्नपि प्रलयकाल रुद्र इव भयङ्करः प्रतीपानामदीपिष्ट कोऽप्यपूर्वः शशाङ्को निष्कलङ्कः सर्वदाह्लादकतया दर्शनीयश्च सर्वलोकस्य प्राप्तो निकाममभिरामतां सजलजलदश्यामलः कोमलश्च । तथा, स्थित्वा गजस्कन्धे तत्प्रेरणे राम इव न कोऽपि समर्थ इति गजसादिभिः श्लाघितः, सम्मतश्चाश्वपृष्ठे, रथचर्यासु च निरतो धनुर्वेदे च परिनिष्ठितः पितृ[1]शुश्रूषणे नित्यसमुन्मिषदभिलाषश्च भृशमुल्ललास ।

लक्ष्मणश्च लक्ष्मि[2]वर्धनो बाल्यमारभ्यासावस्फुरदङ्कुरात्प्रभृति परिमलभरेणैव समुत्पन्नस्तुलसीकाण्ड इव सुतरां स्निग्धः स्वरूपप्रयुक्तदासभावसम्भावितताया रामपर्यङ्केन स्वपर्यङ्कासंयोजने निद्राङ्कथमप्यलभमानः सर्वलोकानामभिरामस्य वशीकृततया च श्रीरामस्वामिनो गुणगणैः सर्वात्मना स्वशरीरमुपेक्ष्यापि त्रिकरणशुद्ध्या सर्वप्रियकरः शरीरस्य बहिःस्थितः प्राण इवापरः तप्तचामीकररुचिः सामुद्रिकालक्षणैर्लक्षितो बाहुरिव दक्षिणो दक्षिणतया सर्वकार्यनिर्वाहैकधुरन्धरश्च सुमित्रानन्दवर्धनः ।

श्रीरामोऽपि क्षणमपि लक्ष्मणस्य विरहमसहमानः, कौसल्यया नीतमपि पुरस्ताद्रसैः षड्भिः स्वादिष्ठमप्यन्नं ज्येष्ठोऽपि क्षुधितोऽपि च सन्नितान्तमनश्नंस्तेन विना, निद्रामपि श्रान्तस्तद्विरहादरोचयमानः समयमयमनैषी त्पुरुषोत्तमः स्वमशेषं शेषात्मानमनुरज्यन्ननुजम् । यदापि राघवो हयमारूढो याति प्रति मृगयां तदा रामानुजो ऽयमव्याजभक्तिसाम्राज्येनाजस्रमुपगतः सभाजनीयतामतिस्नेहः पापशङ्कीतिनीत्या लक्ष्यतां श्रिततयेव सलँक्ष्यमाणः सधनुः परिपालयन्पृष्ठतोऽश्वस्य जवाददृश्यत जाग्रदनुवर्तमानः ।

लक्ष्मणावरजतया तत्तुल्यप्रकृतिश्च सौमित्रिरपरः शत्रुघ्नः सर्वात्मना रामान्यूनप्रभावतया प्रभावन्तं भरत मनारतमपि परिचचार पवित्रतरचरित्रं प्राणेभ्यः प्रियतरं कैकेय्या गर्भसम्भूतं भुवनभाग्यसमुदयमिव कमपि वपुष्मन्तमप्राकृतदिव्यमङ्गलविग्रहश्रीरामभद्रसप्रभञ्च समभ्यधिकभक्तिसम्पत्समृद्धतया गतः समाराध्यताम् । महाभागैश्चतुर्भिरेभिः पुत्रैर्भुजैरिव शार्ङ्गिणो जगदवनजागरूकैर्विभ्राजमानो यायजूकाग्रेसरः केसरीव मृगाणां राज्ञामपि सुराजा बभौ परमप्रीतः पितामह इव स्तोमैस्त्रिदशानां दशरथः परिपूर्णमनोरथः । शास्त्रज्ञानेन दिव्येन कामप्यय मानान्दीप्तिं सौशील्यादिभिरुपास्यान्गुणगणैः प्रमादात्प्रासास्वकृत्यचिन्तासु लज्जावतः सकललौकिकप्रज्ञावतः[3] कीर्तिमतो विवेकवतः पराक्रमवतो दीर्घदर्शिनो दर्शं दर्शं दशरथोऽसावसामान्यतेजःप्रभावान्पितृशुश्रूषणपरायणानात्मजा न्निमग्नः परमानन्दसागरेऽभूल्लोकाधिप इव भगवान्स्वयम्भूः ॥

—: * :—

---

1. पितृशब्देनमातापितृगुरवः
2. ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति ह्रस्वः ।
3. नकर्मधारयान्मत्वर्थीयन्यायोऽनित्योऽसुब्वत इति भाष्यप्रयोगात् ।

॥ श्रीः ॥

# उत्तरो भागः

## ॥ विश्वामित्राभ्यागमः ॥

अथ चतुर्भिरिव हरेर्भुजैर्जगद्रक्षणेऽजस्रन्नम्रद्भिर्दिक्पालोपमैर्वसुरुद्रादित्यविश्वदेवैरिव दीव्यमानैः समाम्नायैरिव ज्ञाननिधिभिः पुरुषार्थैरिवाभिलाषास्पदैः पुत्रैः संवर्धमानैश्च मातृपमातृस्तोमपूर्णादरेण प्रतिक्षणं शुक्लपक्ष चन्द्रमःप्रतिमतामुपेयिवद्भिः पङ्क्तिस्यन्दनः कामप्यानन्दानुभवनिष्पन्दतां विन्दमानः स्वयमादर्शत्वेन धर्मात्मनां समावर्तनोचितसमयसम्प्राप्त्या चैषां विवाहङ्कर्तुमात्तकौतुकः समन्विष्यति स्म तुल्यशीलवयोवृत्ताभिजनलक्षणाः कन्याः सोपाध्यायः सह च समैर्बान्धवैः ।

संसारासार[1]तादर्शनेन जातानां मुखपाण्डुतादीनां श्रीरामभद्रस्य कामकृतत्वं सम्भावयंश्च स्वयं, सम्राड्वा वद्वारक्रियायां त्वरामतितरामदीदृशत्सदसि मन्त्रिणां तावदभ्यागच्छन्महातेजा महामुनिर्विश्वामित्रः । स च दर्शन काङ्क्षत्राज्ञः शरीरी कोऽपि तपसां राशिः सपद्यब्रूत दौवारिकानाख्यात भोः प्राप्तं कुशिकगोत्रसमुद्भवं गाधिनन्दन मिति । तच्छ्रवणमात्रेण विलम्बे बिभ्यतोऽत्यन्तं शापात्प्रविविशुस्ते ससम्भ्रमं राजभवनम् । यदेक्ष्वाकुकुलजलधि कौस्तुभाय प्राप्तमावेदयामासुः ऋषीश्वरं पृथ्वीश्वराय भयोद्विग्नाः सगद्गदाक्षरं द्वाराध्यक्षास्तदैव सपुरोधाः समाहितश्चा "व्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणमि"ति स्मरणात्समालोचनवेलायां महीयसामाकस्मिको ह्यभ्यागमो वाञ्छितार्थवितरणे निपुणो भवति कोऽपि चिन्तामणिर्नियतमिति चिन्तयन्ननुक्षणमुच्चारयंश्चाप्युपांशूदग्रकौतुकः प्रहर्षातिरेक विस्फारितनेत्रः प्रत्युज्जगाम [2]बृहस्पतिमिव दिवस्पतिः काश्यपीपतिरासनात्सद्यः सन्समुत्थितः ।

सम्यगाराध्य विधिवदर्घ्यपाद्याचमनीयाद्यैरनवद्यमुद्यदादित्यशतसमसमुद्द्योतमनुपमगम्भीरिमप्राग्भारपरिभास्वर मीश्वरमृषीणां यदृच्छयायात इति हर्षोद्रेकवशादुदञ्चद्रोमाञ्चश्चक्रवर्ती प्रणिपतन्नष्टाङ्गपातं तिष्ठन्नेव पुरःस्फुरन्किङ्कर इव कृताञ्जलिर्व्याजहार स्वागतमागमज्ञः ॥

---

1. कुमारस्य विशालाक्षं पाण्डुतां मुखमाददे । कपोलतलसल्लीनपाणिः पद्मासने स्थितः ॥ इति योगवासिष्ठम्
2. "बृहस्पतिर्देवानां ब्रह्मा" इति श्रुतिः ।

मुनिनृपश्च नृपतेः प्रतिगृह्यार्घ्यमनर्घप्रकृतेः शास्त्रदृष्टेन कर्मणा तमपूर्वार्थप्राप्तिलक्षणं कुशलं तस्याक्षयञ्च साक मनामयेन मनोहरेण विचारयन्व्याहारेण समन्दहासं चक्रवर्तिनं पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च सुधार्मिकः कुशलं बुभुत्समानः पृच्छन् राजन्नपि ते रिपवः सामन्ता जिता भवन्ति सन्नताः अपि वा यज्ञादिकं दैवमतिथिसत्कारादि च मानुषं कर्म सामदानभेदादिकं गजबन्धनादिकञ्च सुष्ठनुष्ठितमित्यन्वयुङ्क्त पङ्क्तिरथम् । तदनु राजपुरोहितत्वेन भ्राजमानं पूर्वं मां स्पर्धमानोऽपि मद्राजसन्निधिमधुना प्राप्तोऽसीति पृच्छन्तमिव स्वात्मना सम्भाव्यमानमरुन्धतीपतिं सादरभरं समागम्य परिष्वज्य च प्रेम्णा परिपृच्छन्कुशलं तन्मुखेनान्यांश्च यथान्यायमृषीन्महाभागान्व्यचीचरद्योगक्षेमम्। सर्वे च ते प्रहृष्टाः प्रवेश्यमाना वेश्म विशाम्पतेः पूजिताश्च यथाक्रमं स्वं स्वमलमकार्षुः ऋषयः श्रीमदासनम्। तदा मेदिनीपतिर्मेदुरया गिरा प्रमुदितो "भगवन्नद्य मे सफलं जन्म समजनि जीवितमपि सुजीवितमर्च्यमानादप्यति-रिच्यमानेन कुलदैवतात्कुलमलममलश्चानाविलेन पवित्रितं शतगुणं भवता प्रवाहेणेव भगवत्यास्त्रिपथगायाः । भवान्हि स्वैरलीलालास्यविलासानामालयः कोऽपि सत्त्वलक्ष्म्याः कापि रजसां परिमार्जनभूःकिमप्युपशमस्थानं तमसां समुद्य मपद्मषण्डैकमार्तण्डः किमपि पचेलिमं पुण्यफलं सकलं लोकानां सुरासुरनरसमुदयसमुपजीव्यमानराजमानाङ्घ्रिराजीवः प्रणतजनपारिजातः शिखिनो नर्तयितुं दर्शनमात्रेण साधुजनान्समर्थः कोऽपि नूत्नस्तनयित्नुः परमहंसविलासैक मानसायमानतया मानसोल्लासकरः कोऽपि प्रभाकरः कर्तुमकर्तुमन्यथाकर्तुञ्च बिभर्ति प्राभवमसमप्रभः परदुरवापं तपसामेकराशिः प्रतिष्ठितश्च स्वमहिमन्युच्चकासदनारतम् । स्वामिन्स्ताद्भवते स्वागतम् । मृत इति भ्रमापगमाद मृतस्येव सम्प्राप्तिर्विबुधौदनभूतस्य वा, वर्ष इव चिरादनुदके, पुत्रजनिरिवाप्रजस्य सदृशदारेषु , प्रणष्टैश्वर्यलाभ इव प्रमादिनश्चक्षुष इव महोत्सवः, दरिद्रत इव रत्नखनिः प्रणयकुपितस्य यौवतस्येव प्रसादः, लक्ष्म्यनुग्रह इव विपश्चितः, कालादानुकूल्यमिव दुष्कलत्रस्य, दोषज्ञानां गुणवानिव विमर्शः कविलोकस्य, प्रभातप्रबोधशीलस्येव देवपित्रनुग्रहः, सदसि विजय इव गुरुकृपाभाजनस्य, जानराज्यमिव यथेच्छाधिकाराक्लेशितानां, परमकरुणानिधेर्भ वतो हीयं सङ्गतिः प्रीणयति नः सुभगङ्करणी समस्तानामन्तःकरणम् । सर्वेश्वरवदवाप्तसमस्तकामो भवति भवान कामः । पात्रभूताय दिष्ट्या च प्राप्तवते महात्मने हर्षितोऽहं भवते धार्मिक ! किमु वा प्रभवेयङ्कर्तुम् । ब्रह्मन्यद चाक्षुषयं त्वामतो निशापि मे जाता सुप्रभाता । अपि च राजर्षिरिति ख्यातचरोऽद्य तपसा द्योतितप्रभो विभासि ब्रह्मर्षिरतोऽपि गतः पूज्यतमतां बहुधा । प्रभो ! सन्दर्शनादेव भवतोऽस्मि सम्पन्नः शुभक्षेत्र[1]गतः ब्रूतां भवान्यदर्थ मेतद्वृत्तमागमनं, त्वदनुगृहीत एव त्वदर्थपरिवृद्धये स्पृहयामि । कौशिक ! मा विमर्शं कृथाः कार्यस्य यतः कर्ताह मशेषेण । दैवतस्य तवागमनजनितः कृत्स्नोऽप्यभ्युदयोऽनुत्तमश्च धर्मः शक्तिमत्तामादधाति कामपीति वच्म्यहं सर्वकृत्यनिर्वर्तनसमर्थः सम्पन्न इति । इत्थं श्रवणसुखमाकर्ण्य विनीतमुक्तमात्मवता हृदयाह्लादकं च वाक्यं परमऋषिः परमं जगाम हर्षं भगवान्प्रथितकीर्तिविश्वामित्रोऽपि ।

"अथो अस्तोष्ट भृशं तुष्टः परमर्षिः कृत्यविदां वरं नरेश्वरमहो ! निहुत एव ह्यौत्सुक्यमस्तोकमपीयत्ता-मात्मनः शक्तेर्यदयं निर्वाह्यानिर्वाह्ययोरविवेकेन मम पुरोऽपि ब्रूते सर्वं करोमीति । पुत्रस्नेहपाशेन बद्धो दृढतरं

1. हे प्रभो ! तव सन्दर्शनाच्छुभक्षेत्रं सकलपापाभावविशिष्टसकलशुभसाधनपुण्यवद्देहं गतः प्राप्तवान् । तेन च सफलजन्मता निष्पापता च ध्वनिता । "इदं शरीरं कौन्तेय क्षेत्रमि"ति गीतोक्तेः ।।

मदर्थनाकर्णनानन्तरं हन्त ! समुनुभविष्यति क्लेशमतितरां तीव्रमथापि कल्याणकृत्त्वान्न याव[1]त्प्राप्नोति दुर्गतिमिति परं नापितु सम्पत्स्यते भाजनमन्ते श्रेयसामपि । अनुग्रहीतुमेव ह्यहमस्यागत" इत्यन्तरमिप्रयंस्त्रिकालज्ञो विश्वामित्रो राजशार्दूल ! महाकुलप्रसूतस्य वसिष्ठेन च संस्कृतात्मनो दिगन्तविश्रान्तकीर्तेस्तवैवैतच्छोभते सदृशं नान्यस्येति । अचकथच्चेत्थं, यन्मे ब्रवीमि हृद्गतं तस्य निर्वर्तनेऽवश्यं व्यवस्यन्भव सत्यप्रतिश्रवः । महीक्षिद्धर्यक्ष ! यज्ञदीक्षामास्थितोऽस्मि सिद्ध्यर्थं तस्य च विहन्तारौ कामरूपिणौ भवतो द्वौ राक्षसौ सुशिक्षितास्त्रशस्त्रौ वीर्यवन्तौ नाम्ना मारीचः सुबाहुश्च । व्रते च दीक्षात्मन्यनुष्ठिते यज्ञवेदिमभ्यवर्षतां समांसरुधिरौघेन महाघात्मानौ सपरिवारौ । विघ्निते च व्रतसङ्कल्पे कृतश्रमोऽहमपाक्रमे निरुत्साहस्तस्माद्द्रुतं देशात् । यद्यपि हुङ्कारमात्रेण भस्मसात्कर्तुं तावस्मि शक्तस्तथापि शापदानानर्हकाला हि सा भवति व्रतचर्या यज्ञाचाररूपेति समभ्यागमम् । नृपशार्दूल ! स्वपुत्रं सत्यपराक्रमं ज्येष्ठं काकपक्षधरं शूरं मह्यमर्हसि प्रदातुं यश्चकास्ति वितरीतुमत्रासमाश्रितत्रद्धयः स्वयमलस्यन्कुतश्चित्त्वासयंश्च परन्तपः स्मरणमात्रेण शत्रूणां सहस्राणि कुमारोऽपि तेजीयसामग्रेसरो रामः प्राप्तो जगदेकाभिरामतां विरामश्च दुरात्मतेजसांजनानाञ्चायमजस्रं रञ्जनः । अपि च गोपायितुमपायादात्मानं सामर्थ्यमसमान्य जागर्त्यजस्रं मे तेजः किमप्यतिशयितमनन्तमचिन्त्यं विचित्रञ्च येन शतगुणितात्मतेजस्समिद्धो हनिष्यति निकषा यज्ञवाटं वटुरपि पटुस्ते सुतो नियतमनिमिषरिपूत्राक्षसाधमांस्तात्राजीवाक्ष इति राजत्राजस्वात्र त्यक्तातङ्कः ।

मा भूर्भूप ! वृथा शंशयितचेता यतः प्रदास्याम्यस्मै प्रमोदमानः श्रेयःपरम्परां बहुरूपां येन त्रिष्वपि लोकेषु गमिष्यति परां ख्यातिं ज्योतिष्मांस्ते रामभद्रः । तौ च राक्षस[2]पांशौ राममासाद्य पुरतःस्थातुमपि कथञ्चन न भवतः शक्तौ राघवादितरश्च कोऽपि न पुमांस्तौ च हन्तुमुत्सहते । हन्त ! वीर्योत्सेकेन पापकर्माणावपर्याप्तौ च राघवस्य ध्रुवं मन्ये मनीषिणां मान्य ! तावुभौ गतौ कालपाशवशमिति । नार्हसि पार्थिव ! कर्तुं पुत्रस्नेहम् । अहं ते प्रतिजानेऽद्य जनेश्वर ! हतावेव विद्धि तौ राक्षसौ ।

एवं भणन्नपि परगुणेङ्गिताकारविदां विश्वामित्रोऽसौ विदग्धस्तन्मुखात्तनुजविश्राणनेच्छाविरहं "हृदि स्थितस्य भावस्य मुखं हि मणिदर्पणमि"ति न्यायादवबुध्यमानः स्फुरन्मेधाविनामग्रणीः, "हन्त स्वभावसुभगायाः शास्त्राचार्योपदेशाच्च विशेषतः संस्कारवत्या दुर्दैवविलसितान्नृपतेरस्य बुद्धेरहंममेतिदुरध्यासमलीमसजर्जरतरवासोवसनभृशलालसाया मधुरतरवाङ्मधुधाराभिरपि विविधाभिरवशङ्गताया नग्नङ्करणमवश्यं [3]भवति कलनीयं रसिकेन विशुद्धस्वरूपानुभूतिसम्पत्तिमभीप्सता, साध्वसञ्च साधुनानेन निरसनीयं प्रियपुत्ररत्नविप्रयोगोद्भवम् । भवतु विध्वंसयिष्याम्यन्धतमसमस्य व्रध्नायमानो मानसं वसुन्धराधीश्वरस्यापि सततस्तपस्विनः । यस्यैतत्त्रितयं प्रत्युत्पन्नमतित्वं वाग्मित्वमुद्यमित्वञ्च तस्य दुष्करशब्दोऽपि भवति [4]पुष्करपुष्पकल्पः । क्षितिपतिमुखवैवर्ण्यञ्च विलक्षणं यज्ञरक्षणविधि

---

1. यावत्पुरानिपातयोरिति लट्
2. याप्ये पाशप् ।
3. चमत्कारातिशयाधायकतया नाग्लिलदोषसम्भावना
4. पुष्करं=व्योम

श्रवणक्षणे मन्ये स्वार्थपरोऽयमिति मां ग्राहयितुं क्षममिति। स्वःखलु गुणो मुकुर इव परत्र प्रतिफलति। बत! न खलु सहते स्वीयं दोषं परत्र सुधीरपि। अस्मिंश्च सन्दर्भेऽसत्प्रभावस्तवो नियतमश्नुवीत फलेग्रहिताम्। [1]श्लाघा हि दोषावहा न स्तुतिरि"त्यभिसन्धिमाञ्जगौ—

"रामो हि परं ब्रह्म तद्विस्त्वादहमपि यथानिगमान्तम्। व्यतिरेकोऽप्यावयोः परं प्रातीतिकः। सोऽपि लोकवत्तुलीलाकैवल्यमितिनीत्या सकललोककल्याणकलनैकफलकः स्वयमुपादीयमानः कृपया भवति। अतः खल्वभिधीये गाधिसुतोऽहं विश्वामित्र इति नामधेयेन यथार्थेन सद्भिः। ज्ञानवानेक एव भवति चतुरश्च रितुश्चारयितुञ्च सदाचारान्कृत्स्नञ्च धर्मं जगच्छ्रेयसे जीवेश्वरान्यतरस्वरूपेण यथा तथा वा वर्तमानः। ताटका वधार्थमनुयुज्यमानश्च स रामभद्रःस्वयं स्फोरयिष्यति मद्याथार्थ्यं "शासनाद्ब्रह्मवादिन" इति स्वाभेदं मयि सप्रमोदं निवेदयमानः। ब्रह्मवादिशब्दोऽत्र ब्रूते ब्रह्मविदम्। एवञ्च स्फुरावस्तरां परस्परस्वरूपज्ञावावामेव। सर्वात्मभावमुपगम्य देदीप्यमानस्य मानातीतमहिम्नश्च मम किन्तु दोषः स्यादहङ्काराविष्कारे। व्यवहारेण सर्वेणापि भवितव्यमहङ्कारोपक्रमेणेति नित्यनिरतिशयसुखस्वरूपतया प्रकाशमानानां सम्प्रदायोऽप्यस्मादृशाम्। अतएव, अहमन्नमहमन्नमित्याद्युद्घोषो हर्षोद्रेकवशाद्ब्रह्मैवाहमस्मीति साक्षात्कारवतां, गर्भस्थवामदेवस्याहं मनुरभवं सूर्यश्चेति वादोऽनुभवैकसाक्षिकश्च चकास्ति सङ्कुच्छमानो, भगवतश्चाहं कृत्स्नस्य जगत इति मम मायादुरत्ययेत्या दिश्चाहंममकारप्रदर्शकव्यवहारोऽपि समग्रः। महान्श्चेत्रोऽहङ्कारः स्फुरति ज्ञानिनामेव सर्वस्वायमानः परिच्छिन्नतरमांसपिण्डादावहमाद्यभिमानमतिक्षुद्रमतिमात्रानर्थकरञ्च छित्वा ज्ञानासिना नित्यं प्रकाशमानानाम्। अतोऽहमेवैवम्भूतो महात्मनोऽपि विधिहरिहराननयतीति महात्मानं प्रत्यगात्मतया, सर्वविधोत्सवस्वरूपञ्च चक्षुः फलदं सत्यपराक्रमं सत्येन निजस्वरूपेणाकाशइवं परानुपाधीनाक्रमत इति, सति अपराक्रममिति च राममधिसमाध्यवस्थं रमणाधिकरणतया साक्षात्करोमि सर्वदा नेतरः कोऽपि। मया नित्यं स्पर्धालू राजास्थानगतः कुलपौरोहित्यमियन्तञ्च परिपालयन्कालमवस्थितोऽपि हन्त! वसिष्ठोऽयं न रामस्वरूपं ध्रुवमहमिव न वेत्ति। नित्यसन्निहितोऽपि हि न दर्दुरः पद्मानामनुभवति सौरभम्। अहमस्मि भाग्यवानागन्तुकश्चतुरचञ्चरीकसध्रीचीनः कोऽपि रसिकाग्रेसरः। रहस्यमेतत्सर्वं द्विषन्नपि मे गुणग्रहणधुरीणो वेत्त्ययमरुन्धतीपतित्वेनापि प्राप्तःकिमपि माहात्म्यं राममिव,तदभिन्नं मत्स्वरूपमपि। ये चान्ये तपसि स्थितास्त इमेऽपि ज्ञातुमर्हन्ति यथाकथञ्चिदि"त्याद्यर्थाभिव्यञ्जने जागरूकं, अहं वेद्मि महात्मानं रामं सत्यपराक्रमम्। वसिष्ठोऽपि महातेजा ये च मे तपसि स्थिताः॥ इति श्लोकं भगवान्भविकानां दायको भास्वांश्चासामान्येन केनापि सार्वज्ञ्येन मुनिसार्वभौमः॥

असमानतया काशमाने च सर्वदर्शनात्मना शब्दब्रह्ममहाकाशे कौतस्कुतश्च तत्रतत्र प्रतीयते कोऽपि विधु द्विद्योतश्चक्षुषेव मनसापि सुदुरुत्प्रेक्ष्यः सूक्ष्मेक्षिकाविकलानामविश्वासार्हो निरुपमश्रीमद्रामस्वामिमहिमस्तोमपरिस्फोरकः समर्थश्च किमपि चमत्कर्तुमित्याविश्चिकीर्षयेव समभाषत महर्षिवृषभः "राजन्यदि[2]शे तेऽभिलाषस्तर्हि मय्यव्ययीभावश्च शुभो विधीयताम्। यतस्तपोबलेनास्मि स्वतन्त्रः कर्ता भव्याभव्यानाम्। विमृश्य शास्त्रदृशा हि कर्तुरीप्सिततमं

---

1. अविद्यमानगुणसम्बन्धज्ञापनं श्लाघा, गुणिनिष्ठगुणाभिधानं स्तुतिः॥ 2. शे-सुखे

कर्म विभायात्प्रशस्तं भगवत्कैङ्कर्यरूपम्। स हि सर्वसंसारधर्मवर्जितः पुरुष औपनिषदः श्रीरामः। यत्सुखदुःखात्मकं संसरणं जन्मन्यन्वभावि पूर्वत्रासिद्धं तद्भवत्यत्र। इत्थञ्च तदाद्यन्तवदेकस्मिन्नसङ्गे कथमर्हति सम्बन्धुमाकाश इव। ईश्वरार्पणं कर्तुं योग्यं यदन्तः करणं सम्पद्यतेऽप्लु[1]*तवदुपस्थिते सात्विकत्यागादौ, तदेव विशुद्धं सत्साधकतमं करणं ज्ञानायावकल्पते। यस्य भगवद्विषये कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखं भवति तेन च मनसा निर्वृतेन स भवितुमलमीश्वरोऽपि। सर्वथा ध्रुवमपायेऽपादानं न न्याय्यं यतस्तत्राप्यभ्युदयकामैः शोभनादानात्मनि भगवदङ्घ्रिसरोरुहपरिग्रह एव भवितव्यमवश्यं स्पृहयालुभिः। यतः श्रीरामादइउणित्याद्यक्षरसमाम्नायसमाम्नायमानादक्षरात्परमपुरुषान्नारायणदेरिव नेन्द्रस्य परस्यापि पारम्यम्। यतो भगवद्भक्तिसाम्राज्यलाभबलादेव त्रिदिवेश इति मघवा बहुलं भवति महीयमानोऽपि। न हि बुभुक्षासन्धुक्षितोऽपि जिघत्सति व्याघ्रो घासम्। सर्वलोकानामेक एव स्वत्त्वेन स्वामित्वेन च सन्निन्धानः स्वं धाम जन्मनैवालङ्कृतवानित्येतावता किमिति निर्नीत्यभिमन्यते ममायं पुत्र इति। नह्यभिमानमात्रेण गृहदीपो भवति भगवान्प्रभाकरः सर्वलोकैकप्रदीप" इति। एवमपि रामदाने राज्ञो वैमनस्यं किञ्चिच्चेष्टादिना लक्षयित्वा प्ररोचयितुमनाश्चक्रवर्तिनं प्राहविश्वामित्रः, यदि धर्मलाभं यशश्च परमं स्थिरमिच्छसि तर्हि राममर्हसि मे प्रदातुं जगद्धितकृते। वसिष्ठप्रमुखाश्च हे काकुत्स्थ! ते सर्वे मन्त्रिणो यद्यनुमन्वते तदा वा मह्यं वितर श्रीरामभद्रमक्षुद्रभद्रलाभार्थमभिप्रेतमतीतबाल्यत्त्वान्मातापित्रोरसक्तमन्यत्र च महात्मत्वात्। अतश्च दातव्यो रामः क्षत्रं हि चातुर्वर्ण्यरक्षणकृते विशिष्य च ब्रह्मक्षतिक्षपणार्थञ्च सृष्टम्। क्रतुत्राणाय दिश दशरथ! दशरात्रमात्रं रामं राजीवलोचनम्। कुरुष्व च कर्तव्यं यथाकालानतिपातम्। मा च वृथा मनः कृथाःशोके। निरर्धमभीप्सता प्रशस्तञ्च धर्मं शाश्वतं भूतिमिच्छता भूपतिना नियतमनुष्ठेयो ज्येष्ठस्याप्यात्मजस्य जगद्भूतये विश्राणनमित्येष धर्मः परमः सम्मतश्च सताम्। स्वाचभवते [2]स्वस्तिरस्तोकं लोकभविकमन्विच्छते छत्राधिपतय इति। विरमति चैव मुदीर्य मुनावात्मारामे रामेऽर्पितजीवितो जनाधिपः शोकोद्विग्नमनास्त्रस्यंश्च तीव्रं हृदयविदारणमिव लब्धवानासना प्रचचाल धीरोऽपि॥

भाषितमुपश्रुत्य विश्वामित्रस्य मुहूर्तमिव निश्चेतनो नरपतिरवोचत प्रतिगतः पुनःसंज्ञामहंवेद्मीत्याद्युक्तं चेतस्यतन्वान एव मनागपि बलवता निबद्धः पुत्रप्रेमपाशेन मुनिसुत्रामाणमपि निजयज्ञरक्षणचञ्चुष्कतया स्वार्थमात्रप्रसितमिति मोहकलुषीकृतशेमुषीकतया प्रतिपन्नः—मुनिस्वामिन्नसम्पूर्ण[3]षडधिकदशसंवत्सरो मे विलसति वत्सलः। "षोडशवर्षः क्षत्रियकुमार एव कवचधरो युद्धार्हः" इति हि शास्त्रम्। बालो द्वादशवर्षोऽयमकृतास्त्रश्च कथमद्य योद्धुं क्षमः। अनपगतप्रायदुग्धगन्धमुग्धस्निग्धवदनः कदनानर्हः कुसुमसुकुमारशरीरमनोहरः प्रत्यग्रमुदिरमेदुरः सारसदलनेत्रश्च रतिकरः सदामदुत्सङ्गपरिवर्तनसमुत्सुकतया कथमपि मद्विरहमसहमानः पूर्वस्यामेव शर्वर्यां स्फुरन्निद्रालसो बालिशः शशिवद्वशयितुमीशोऽसावपथि चरितुकामैरात्रिञ्चरैः कूटयोधिभिरपवित्रचरित्रैरभ्यस्तास्त्र

---

1. अप्लुतवत् = चलनाभाववत्

2. स्वस्तिशब्दोऽनव्ययमपि। "प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः। स्वस्तिर्भवतु मे नित्यं सुखञ्चानुत्तमं तथा॥ इति भविष्योत्तरे प्रयोगात्॥

3. अखिलदोषसम्भावनया नोक्तमूनषोडशेति। आर्षन्तु तथावचनमनियोगार्हम्।

शस्त्रग्रामैः कथमियाद्योद्धुमार्हन्तीमसङ्ख्यैरुच्छृङ्खलैरेकेन बत ! मानुषेणापि स्वामप्यबुध्यमानः सङ्ग्रामं विनयाभिरामो मे रामः श्रीदेव्याः कोऽपि हृदयङ्गमो महानारामश्च ।

असंशयमफलमेवैतद्यद्रामा[1]नयनं काममिव निग्रहीतुं यातुस्तोममपीत्यभिप्रयन्विज्ञापयामि भगवन्प्रकृत्या परार्तिपरीहारैकधुरन्धरः स्फुरसि । अनुगृहाण विसृज्यतामयमध्यवसायः । प्रतिपक्षरक्षःक्षपणक्षमा दक्षा चेयमक्षीणा क्षौहिणी वर्तते नित्यसन्नद्धा यस्या अहमस्मि पतिरीश्वरश्चानया संवृतो गत्वा नियुध्य निशाचरैर्विजयलक्ष्म्या भवन्तमृषीश्वरमाशु तोषयितुमसकृत्तुषितकृते विध्वंसितदैत्यव्रातः । इमे शूराश्च विक्रान्ता अस्त्रविशारदा मे भृत्या योद्धुं भवन्ति योग्या यातुभिः सर्वात्मनेति प्रभो ! याचे न रामं नेतुमर्हसि । अथवा धनुष्पाणिरहं गोप्ता च सङ्गरमूर्धनि यावद्धरिष्यामि प्राणांस्तावद्योत्स्ये निशाचरैर्माकृथाः संशयं वृद्धोऽहमस्मीति । युद्धे तु प्राप्तास्मि पुनर्यौवनमेव विजयाधायकमिति प्रतिजाने सुरक्षिततया भविष्यति निष्प्रत्यूहा ते व्रतचर्या । अनुमन्यस्व याव द्गच्छामि प्रभो ! याचे न रामं नेतुमर्हसि । बालश्चाकृतविद्यो बलाबलमविद्वाननस्त्रबलयुक्तो न युद्धविशारदश्च कूटयोद्धृभिः कथं स्याद्योद्धा व्याघ्रैरिव क्रूरैर्हरिणशावकः पिशिताशपाशैः । विप्रयुक्तोऽस्म्यहं विप्रर्षे ! रामेण क्षणमपि नोत्सहेय जीवितुं सलिलादुद्धृत इव महानपि मत्स्यः । प्रभो ! याचे न रामं नेतुमर्हसि ।

यदि नेतुमिच्छसि ब्रह्मन्नचतुरं समररङ्गभुवं मम राघवं चतुरश्वतुरङ्गसमन्वितमेव त्वं नय मया सह तम् । यावत्षष्टिं वर्षसहस्राणि ममानपत्यतया नितान्तं तप्तस्य कुलदैवतस्य कृपया पूर्वेषां चाशिषां बलाद्धर्म्ये वर्त्मन्युत्पा दितोऽयं सुतः कुलतन्तुरिति दयमानमना मुने ! प्रार्थये न रामं नेतुमर्हसि । ज्येष्ठतया सर्वजनमनोरञ्जनैकता नतया च साम्राज्यार्हं त्रिष्वपि पुरुषार्थेषु धर्माधीनवृत्तिमत्तया प्रधानञ्चतुर्णां मध्ये परमप्रेमास्पदञ्च मुने ! प्रार्थये न रामं नेतुमर्हसि । योद्धव्याश्च यातुधानाः किंवीर्याः कस्य वा पुत्राः किन्नामानः कथम्प्रमाणाः कीदृशा काराः के वा मुख्यास्तेषां गोप्तारः कथञ्च तेषाञ्छलयोधिनां मया मामकैर्वा बलैः प्रियकुमारेण वा मे रामेण प्रतिकर्तव्यं भवत्यभिमतं भगवन्भवतः । कथं वा वर्तितव्यं व्यूहप्रकारेषु परनिरोधिषु वीर्योत्सिक्तानां विषये राक्ष सानाम् । शंस मम सर्वं विशेषेण जिज्ञासमानस्येत्यभ्यर्थ्यमानमचिकीर्तद्दर्षिर्विश्वामित्रः पङ्क्तिरथम् । पौलस्त्य वंशप्रभवोऽस्ति रावणो नाम राक्षसः साक्षाद्वैश्रवणभ्राता विश्रवसश्च मुनेः पुत्रः । स हि महाबलो वृतश्च राक्षस बलैरसङ्ख्यैरुग्रवीर्यैस्त्रीनप्यर्दयति निर्दयो लोकान्नक्तन्दिवं ब्रह्मणा च दत्तवरः । स स्वयमविघ्नकर्तापि यज्ञानां प्रेरयति दुरात्मनो यातुधानान् । तेष्विमौ मारीचः सुन्दसुत उपसुन्दपुत्रश्च सुबाहुः करिष्यतः क्रतुविघ्नममोघवीर्यौ देवाना म्प्रियाविति । रावणाभिधानश्रवणमात्रेण तत्क्षणं क्षोण्या भर्तुराविवेश मानसं महांस्त्रासः । व्यदीर्यतेव हृदयमाछिद च्छायतामास्यमभ्रमच्छिरश्चक्रवदगच्छच्चक्षुस्तरलतामस्रवच्छ्रमजलमध्वंसत सन्धिबन्धः सपद्यवेपत वपुरशुष्यतामोष्ठ पुटौ । च्यवमान इव च मानवेश्वरः श्वासनादुच्छ्वसंश्च भृशं रुद्धकण्ठोऽपि दशकण्ठतस्त्रासाद्दशरथोऽनिच्छयैव यत्किञ्चिदिव विवक्षंस्तावल्लक्ष्यमाणोऽपि, कथमप्युपात्तधृतिरन्त एवं विनिश्चिन्वन्नुवाच दैन्यञ्च प्रदर्शयन्ननुचित मात्मनः । धर्मविदां वर ! मुनिसुराजन्कुरुष्व मयि कुमारे च मामके प्रसादं याचे च भूयः कृपणः । मम खल्व

---

1 रामाया रामस्य चानयनं रामानयनमित्यर्थः ।

ल्पभाग्यस्य भाति भवानेव दैवतं परमो गुरुश्च । देवदानवगन्धर्वाः पतगपन्नगोरगाश्च यक्षा यदि युधि न शक्ताः स्थातुमपि पुरस्तात्पौलस्त्यस्य कुतः शक्ष्यन्ति मर्त्यास्तत्रापि वयं प्रवयसः सह दयनीयतामुपगता रामेण भृशमर्भकेण स हि सहस्ररश्मिरिव सामुद्रं रसमादत्ते वीर्यसारं प्रत्यवस्थातॄणामपास्तघृणः ।

अये ! तन्नैवाहमये योद्धुं धैर्यं तेन तदीयैर्वा दुरात्मभिर्मारीचप्रभृतिभिः । नरमप्यमरप्रख्यमनवरप्रकृति मनवरतरतिकरमविदितसङ्ग्राममप्रसङ्गं ब्रह्मन्नवेहि नैव वितरामि पुत्रकम् । विहन्तारौ च क्रतोरक्रममुभौ तौ हन्त ! सुन्दोपसुन्दनन्दनावमन्ददुर्मदान्धौ स्तस्तरां कृतान्तप्रतिमावातश्च भूयो ब्रवीमि ब्रह्मन्नैव वितरामि पुत्रकम् । ब्राह्मणस्य तत्रापि सतो मुनेस्तवानुनयार्थं वा ससैन्योऽहमासाद्य समराङ्गणं सह सुहृद्गणैर्यथाशक्ति कालानुकूल्यञ्च प्रतीक्षमाणो योत्स्ये तयोरन्यतरेण भगवंश्चेद्वाञ्छसि, पुत्रकं त्वभ्यधिकमपि प्राणेभ्यो नैव विश्राणयामि । इति प्रजा पालजल्पनजालभङ्गीभिः प्राज्याज्यसिक्ताभिरिव समिद्भिर्जातवेदाः प्रजज्वाल जातः क्रोधः समिद्धः स्फुरतोऽप्यात्म वतामनुत्तमस्य मुनिसत्तमस्य । कौशिकश्च विवेकिनमपि तदानीमनीतिपथमवतारितं दशरथं पुत्रस्ने[1]हेन पर्याकुलाक्षर मथापि स्वं धार्मिकप्राग्रहरंमन्यमुत्पश्यन्नन्यानधीनोऽपि मुनिर्ययावयमहो ! मन्योः पराधीनताम् । मुनयो ह्यध्यास्य समिन्धते शमैकधना गुणगणशिखरिणः शृङ्गं किमपि समुत्तुङ्गम् । यदि रोषः प्रादुष्यादमीषां सर्वदुस्सह एव सः । अतः स्तोकोऽपि यदि न विधेयो भवत्यभ्युदयकामैरपराधः कथङ्कारं तर्हि सहेत स हिमवद्द्वयसस्तत्रापि सुलभ क्रोधस्य सततस्तपसामेकराशेर्विश्वामित्रस्य । अपस्वर इव श्रुतिगीत्योः, श्रवणमधुरोऽपि शब्द इव च संस्कार विधुरः सुतरां भवति ह्यरुन्तुदः प्रज्ञावादः प्राज्ञम्मन्यानाम् । किमुत विरहे मधुरिम्णश्च । तच्चुक्रोध तीव्रमृषिर मृष्यन्धर्मन्याययोर्भ्रंशमप्रतीक्षितमीशितृत्वात्प्रजानाम् । साम्प्रतञ्चैतत् । म्रदिमा हि भवति परिभवास्पदम् । अदशन्हि वृश्चिकः साधुक्रमीयमानः स्यादसकृदुपद्रुतश्च । समये तेजीयसामावश्यकमात्मशक्तिस्फोरणमपि । बभूवे च तदा मुनेः सुसमिद्धेन क्रोधकान्तारपावकेन स्पर्धया न्यग्बुभूषतेव तदीयं तपोज्योतिरपि । अधिचिक्षेप सपदि कोपसन्दोष्ट पुटो भ्रुकुटिभयङ्करः संवर्तरुद्र इव दुर्दर्शश्च निर्दहन्निव नेत्राभ्यामतिमात्रताम्राभ्यां प्राप्तवेपथुः ऋषिर्दशरथ ! " कर्ता चाहमशेषेणेत्या "दिना साहङ्कारोद्रेकं प्रतिश्रुत्य हातुमिच्छसि प्रतिज्ञामधुनोच्छृङ्खलः प्रमत्तो मधुनेव ।

जानीष्व नायं विपर्ययः परं प्रतिश्रवस्य ब्रवीमि ध्रुवं कुलस्यैवेति । असम्भवस्त्वस्मेऽप्यर्थिवैमुख्यापादनमिति चिरनिरूढं धर्म्यञ्च राघवाणां माष्टुं यशः प्रावर्तिष्ठाः । " नह्यर्थिनः कार्यवशादुपेताः काकुत्स्थवंशे विमुखाः प्रयान्ति " इत्येवमादि सौभरिप्रभृतीनां वचनं कनत्कनकशिलालिखनसमुचितमनलम्पुरु[2]षीणेन कर्मणाकार्षीः सलिललेखार्हं केवलंश्चिकीर्षन्रघूनपि लघून्निर्मन्दाक्षस्त्वं मन्दः क्षमाविहीनः क्षमापतिः । यदीदं ते क्षमं यास्यामि राजन्यथागतम् । त्वमपि राजस्व । भोः ! काकुत्स्थ मिथ्याप्रतिश्रवः सबान्धवः सुखी भव च सुचिरमिति । तदानीं कृत्स्नापि वसुधा चचाल । कार्यमस्माकं कथं सेत्स्यतीति शङ्काकलङ्कितानाञ्चेतस्यादित्यानां विवेश मह त्तरस्त्रासश्च जगत्समस्तमपि विदित्वा त्रस्तमत्यन्तं स्वसमयोगक्षेममहात्मपरीभावाक्षमः क्षमैकसारतया विश्वामित्रा

---

1. पुत्रस्नेहेन=कर्तृ करणञ्च ।
2. पुरुषायालमलम्पुरुषीणं तेनेति विग्रहः । अषडक्षाशितंग्वित्विति खः ॥

धिक्षेपाच्च समुद्विग्नमाना मुनिसुनासीरो भगवान्वसिष्ठोऽपि "स एष हि निमेष एवैकस्मिन्नशेषमृषिरुदितेर्ष्यो नाम्ना परमवशेषयितुञ्जगत्सह द्रुहिणमरुद्गणैः पुनः स्रष्टुञ्च विष्टपान्तरं स्फुरति परमसमर्थः । रघुपतेरव्यतिरिक्तोऽप्ययं जीवन्मुक्तशिखामणिः कल्याणमतिर्लोककल्याणानां मूलं श्रीमद्भगवत्कल्याणमविकलमाकलयितुं "लोकवत्तुलीला कैवल्यमि"ति नीतिमनुरुध्य क्षत्रिय इव भगवान्व्यवहारसरणिमतीर्णो ब्राह्मणरूपेण परमनुजिघृक्षया । रक्षः क्षपणक्षमं क्षात्रमुत्तेजयितुं तेजो ब्राह्मशक्त्याधानेन भगवत्कैङ्कर्यैकरसिकतया दिव्यास्त्रशस्त्रादिभिर्ज्ञानञ्च कृत्स्नं रहस्यमुपहारीकृत्यात्मान कृतार्थयितुमाचार्यव्याजेन कृत्वा भगवतः स्वात्मार्पणं भोग्यतापादनपुरस्सरमनुभूय च प्रीणयितुं[1] निर्वर्तयितुञ्च देवकार्यं कृतकृत्यस्ताटस्थ्यादपुनरावर्तितुकामश्च प्रपञ्चव्यवहारे, तपश्चरिष्यञ्श्रीरामब्रह्मणि बिभ्यदिव जगतो निलीयमानो हिमवत्पार्श्वे,ऽहिमकर इवाद्य स्वयं समायातः श्रीगायत्रीमहामन्त्रप्रतिपाद्यश्रीम द्रामभद्रसन्दिदृक्षासन्धुक्षित इत्यन्तरभिसन्दधानः सर्वज्ञः प्रकाशमचष्ट विचेष्टमवनिनायकम् । नृपश्रेष्ठ ! साक्षाद्धर्म इवापरस्त्वमिक्ष्वाकूणां प्रसूतः कुले । धृतिमान्सुव्रतः श्रीमांश्च न हातुमर्हसि धर्मं शर्मदं वर्मणश्चाभ्यधिकम् ।

धर्मात्मेति ख्यातश्च त्रिष्वपि लोकेषु प्रतिपद्यस्व स्वधर्मं, न वोढुमर्हसि कथमप्यधर्मम् । राघव ! प्रतिज्ञाय करिष्यामीत्यकुर्वाणस्य नियतं भवेदिष्टापूर्तवधः । कृतास्त्रमकृतास्त्रं वा तव पुत्रं कुशिकपुत्रेण गुप्तञ्चामृतमिव ज्वलन चक्रेण राक्षसा वान्ये वा न शक्ष्यन्ति किमपि कर्तुं मनसापीति । तदनु सद्यः प्रतिभातमैक्यमनुसंहितवांश्च राम विश्वामित्रयोः पारमार्थिकं भक्त्या निमीलिताक्षश्चर्षिरुभयोरपि स्वरूपं श्लिष्टवर्णनेन प्राह—

"एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याधिको लोके तपसश्च परायणम् ॥
एषोऽस्त्रान्विविधान्वेत्ति त्रैलोक्ये सचराचरे ।
नैनमन्यः पुमान्वेत्ति न च वेत्स्यन्ति केचन ॥" इति ।

नृपते ! श्रृणु भूयः, कृशाश्वे च प्रजापतौ राज्यं प्रशासति तेनैव कौशिकायास्मै दत्ताः सर्वास्त्ररूपाः पुत्राः परमधार्मिकतया पापिनमस्पृशन्तः । एते हि दक्षकन्ययोः सुताः । मातृप्रभावादपि नैकरूपा महावीर्या दीप्तिमन्तो भवन्ति जयावहाश्च । अजनयतामुमे अपि शतं सुतानाहत्य कन्ये दक्षस्य । तयोर्जया नाम पञ्चाशतमात्मजान सुरसैन्यानां विनाशाय कामरूपिणोऽमेयविक्रमाल्लेंभे । अपरा च सुप्रभा संहारान्नाम दुर्धर्षान्दुराक्रमान्बलीय[2] सश्च । तानि चायमस्त्राणि वेत्ति सर्वाणि भगवान्कुशिकात्मजः स्वयमपूर्वाणाञ्ज जननेऽपि शक्तः सुतराम् । सर्वज्ञस्यास्य महात्मनः किञ्चिदप्यविदितं नास्ति काकुत्स्थ भूतं वाथ भव्यम् । राजन्न रामगमने संशयमर्हसि कर्तुम् । शक्तोऽपि स्वयं वैरिनिरसनेऽयं कुशिकसुतस्तव पुत्रहितकृत एवाभियाचते त्वामभ्युपेत्येति गृहाण । राजन्किवै कोक्त्या वीक्षमाणोऽहमार्षेण चक्षुषा रामविश्वामित्रयोरव्यतिरेकमाख्यामि नित्यसिद्धं भूयस्ते सम्प्रतीत्यै गुरुशिष्य भावं ग्रहीष्यतोर्लोकार्थम् । अवधत्स्वेत्थमरामो न विश्वामित्रो नाविश्वामित्रश्च राम इति स्वरसः । सर्वेषां मित्रे[3] चर्षावस्मिन्परतया स्थित एव विश्वाकारस्य भगवतो रामस्य वृद्धिरपीति दर्शनमपि समस्त्यार्षम् ।

---

1. आत्मानमित्यस्यानुषङ्गः ॥ 2. पञ्चशतमात्मजानित्यनुषङ्गः ।
3. मित्रे मित्रशब्दे, परतयानन्तरपरदेशतया स्थिते विश्वाकारस्य विश्वशब्दान्त्यह्रस्वाकारस्य, वृद्धिर्दीर्घाकाररूपा । आर्षं पाणिनीयम् । भव्यार्थस्तु स्पष्टः ।

# ॥ विश्वामित्राय श्रीरामभद्रसमर्पणम् ॥

अथ पाथःकतकेनेव चेतोऽप्यकृतकं नृपतेः सपदि प्रससाद गुरुमहाराजमिहिरमनोहरव्याहारेण। विजया काञ्चीव निगमानुग्रहं रसिकशिखामणिरिव संस्कृतप्रतिभाविलासं पारावार इव पर्वशर्वरीश्वरं कलहंस इव मानसोल्लासं चकोर इव कैरविणीजारमभ्युदयकाम इव गुरुप्रसादं तारापथ इव नक्षत्रमुक्ताफलाकल्पमैन्द्रदिग्भाग इव पुष्पवदुदयञ्चञ्चरीक इव व्याकोचमणीचकोच्चयमसत्स्वप्नोपहत इव सन्दर्भप्रबोधं शूर इव समराजिरं दरिद्रदिव द्रविणागमं सरोजाक्षवक्षःस्थलभोग इव स्फुरदिन्दिराविहारं नरपतिरधिगम्य कुलाचार्यतिलकदिव्योपदेशं सद्यः प्रहर्षोत्फुल्लमुखकमलः काममुल्ललास। उत्तमर्णाय सकुसीदमिव मूलधनं दित्समानोऽसावसमानाय मुनिमहेशानाय सलक्ष्मणमाजुहाव यायजूकाग्रेसरः श्रीरामचन्द्रम्। "स्वस्तिनोमिमीता"मित्यादिभिः फलेग्रहिभिर्दिव्यमङ्गलसूक्तानां कदम्बैरम्बया प्रथममभ्यर्हिततया कृतस्वस्त्ययनं तातेन ततस्ततमहिमस्तोमश्रेष्ठेन भगवता च वसिष्ठेन सप्रमोदमभिमन्त्रितं मूर्धन्युपाघ्राय नृपव्याघ्रः प्रियं पुत्रं कुशिकपुत्रायान्तरात्मना प्रवितितार परमोदारः सुप्रीतेन। तदानीं गन्धवहः सुखस्पर्शो ववौ विरजस्कश्च विश्वामित्रमनुगतं चराचराय रोचमानं प्रीणयितुञ्जगत्प्राणस्यापि प्राणमात्मनो रामं राजीवलोचनम्। देवदुन्दुभिनिःस्वनैः साकमवतारप्रयोजनोपक्रमसूचकतया प्रशस्तैर्दशरथीयोऽपि ववृधे शङ्खदुन्दुभिनिर्घोषः प्रहर्षाविष्कारकः। हन्त! सर्वं यदर्पणं सत्क्रियमाणं शोभते रमणीयं तस्याप्यर्पणं भगवतः कृतं ब्रह्मर्षितर्पणकृते गुणिगणैकमणिदर्पणायमानेन मानवनाथेन लोकैकभागधेयसमुदयेनेव केनापि देहिना कौसल्याजानिना। अपेक्ष्य पुत्रीयेष्टिं स्वार्थमात्रोद्दिष्टां सर्वलोककल्याणकामनया विहितोऽयं प्रशस्यते भूयस्तरां श्रीरामसमर्पणलक्षणः क्रतुमहाराजो महाराजेन मुनिमहाराजस्य कृते जगत्क्षेमैकचक्षुष्कतया विश्वेषां विशिष्य विश्वाकारस्य श्रीरामस्वामिनो मित्रस्य कस्याप्यपूर्वस्य। अस्मिंश्च सुमहति यज्ञे पुरोहितः पतिररुन्धत्या हव्यञ्च दिव्यमाज्यं श्रीरामः पयस्विन्या इव पूज्याया कौसल्याया एव परमं स्वभूतं यजमानश्च दशरथः समर्पणाधिकरणञ्च भगवान्विश्वामित्रः फलञ्च लोकक्षेममिति तुषिताश्च तोषिताः कामं ववृषुः पुष्पवर्षं सौरभसमुद्भ्रमद्भ्रमरझङ्कारभरमुखरं स्वर्वारनार्यश्च ननृतुरुच्चैस्तरां यथागन्धर्वगानं रणन्मणिनूपुरं मनोहराः॥

# श्रीरामलक्ष्मणाभ्यां सह विश्वामित्रस्य स्वाश्रमं प्रति गमनम्॥

अथो अनुसृत्य भगवन्तं विश्वामित्रं "तेस्यों विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्र इत्याचक्षत" इति श्रुतिनिरुक्त्या पवित्रया स्फुरत्तरं मैत्र्या परमात्मा श्रीरामः केवलं लीलयावलम्बितनीलबालभावसुभगः

स्निग्धमधुरः काकपक्षप्रेक्ष्यः पृष्ठतः समन्वीयमानः सौमित्रिणा धनुष्पाणिरन्वगच्छत् । [1]तार्क्ष्यविश्राणिततूणीर धारिणौ कार्मुककरौ बद्धगोधाङ्गुलित्राणौ वल्गत्खड्गौ मातङ्गाविव मित[2]ङ्गमौ चारुवपुषा वेषेण च हृदयङ्गमा वश्विनाविव पितामहमचिन्त्यमहात्म्यमिव महादेवं कुमाराविव च पावकात्प्रादुर्भूतौ [3]स्कन्दविशाखौ समनुयन्तौ चक्रवर्तिकुमारौ वात्सल्यातिशयादृषिपुङ्गवः पिबन्नपि पदे पदे नेत्राभ्यान्नैव तृप्तिमाप पर्याप्ताम् ।

भारतकेतुरिव समुच्छ्रितश्चारिमगम्भीरिमभ्यामनुपमः, कलहंसकारण्डवाभ्यामिव कमलाकरः श्रियःपति रिव चक्षुर्भ्यां पुष्पवद्भ्यां [4]मधुमलयसमीराभ्यामिव वनान्तस्तारापथ इव तटित्वदिरम्मदाभ्यां शब्दार्थालङ्काराभ्या मिव काव्यश्रीविलासः शासकमार्ग इव धर्मनयाभ्यां पुरुषप्रकृतिविलासाभ्यामिव संसारः पुरुषोत्तम इव वेदा[5]न्ताभ्यां धातुप्रत्ययाभ्यामिवाख्यात[6]शब्दः प्रद्युम्न इव रतिविभ्रममणीचक्रमार्गणाभ्यां देशकालाभ्यामिव पुरुषकारश्चकासामास भगवान्कौशिकोऽसाववनीश्वरकुमाराभ्यामधरीकृतश्रीकुमाराभ्याम् । स च गत्वाध्यर्धयोजनं सरय्वा रोधसि दक्षिणे विचक्षणो महर्षिर्वाग्विदां रामेति श्रवणमधुरां मनसो रसायनायमानाञ्च बभाण वाणीम् । वत्स! माभूदशनसमयातिपातः । शुद्धाचमनं तनु त्वमनुजेन । मन्त्रसमष्टिरूपां गृहाणेमां बलामतिबलाञ्च । नैव स्युः श्रमज्वररूपविपर्यसाः । सुप्तमनवहितं वा नैः ऋता नियतं न शक्ष्यन्ति मनसापि धर्षयितुम् । किम्बहुना । बाहुवीर्ये सौभाग्ये दाक्षिण्ये ज्ञाने बुद्धिविनिश्चये तथोत्तरप्रत्युत्तरयोश्चोचारयतोः सर्वज्ञानजनयित्र्याविमे, युवयोर्न सदृशस्त्रिषु भविष्यति भुवनेषु । स्याच्च विपुलं यशः क्षुत्पिपासे च नैवोत्स्येते । इमे ब्रह्मणः सुते सदृशाय ते प्रदास्यामि सलक्ष्मणाय । धर्मविग्रह! यद्यपीमे गुणाः समग्रास्त्वयि नित्य सिद्धाः सौभाग्यादयस्तथापि तपोलब्धे एते पवित्रपात्रे त्वय्युपदेशात्सर्वतपःप्राप्यतया प्रशस्ते च शास्त्रोक्त फलादधिकफलप्रदे भविष्यतो नात्र कार्यः संशय इति । ततो जलं स्पृष्ट्वा शुचिः प्रहृष्टवदनो रामः सानुजः प्रतिजग्राह उभे विद्ये महर्षेर्भगवतो भावितात्मनः । समुदितविद्यः शरदि भगवान्सहस्ररश्मिरिव भूरिविक्रमः शुशुभे च तदानीं श्रीमान्रामचन्द्रः । कुशिकात्मजोऽपि राजकुमाराभ्यां गुरौ कर्तव्यान्युपदिशन्पादसंवाहना दीनि "पूर्वोत्थायी जघन्यसंवेशीत्या"दीनि च वचनानि स्मर्तॄणां, तृणशयने काममनुचिते शयानाभ्यां स्वललिता लापकलापैरतिवेलमुपलालिताभ्याञ्च ताभ्यामधिसरयूपारमुवास तां सुखं कृत्स्नां रजनीम् ।। अङ्गानत्र प्रयियासुः ऋषिवृषभो राजकुमारौ तृणमिश्रे शयानौ पर्णसंस्तरेऽभ्यभाषत प्रभाते सौखशायनिकीबुभूषुरभ्युपगम्य निद्राकालिकश्रियमनुभवन्विस्मितः । श्रीराम! शोभनपुत्रवती कोसलेन्द्रदुहिता भवता । अतस्तादृशस्य तव

---

1. अत्रेदं तूणीरादि बैष्णवं गरुडेन दत्तं रामाय ताटकासुबाहुवधाय मरीचस्य समुद्रे पातनाय च । न हि प्राकृतशस्त्र साध्यमेतत् । तदुक्तं पाद्मे—"पक्षी तार्क्ष्यः समागम्य त्रीणि चास्त्राणि कार्मुकम् । सर्वभूतैरदृश्यः सन्दत्त्वा ताभ्यां पुनर्ययौ ॥" इति ॥ अस्त्राणि=शस्त्राणि, खड्गचर्मतूणीररूपाणि ॥
2. गमेः सुपि वाच्य इति मुम् । असंज्ञार्थमिदम् ॥
3. "ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः । स्कन्दो विशाखः शाकश्चनैगमेषश्च पृष्ठतः ॥" इति भारतोक्तेः ॥
4. मधुर्वसन्तः ।
5. संस्कृतद्राविडवेदान्ताभ्याम् ।
6. यद्यपि कृदन्तोऽपि सहितो धातुप्रत्ययाभ्यां तथाप्याख्यातशब्देन तस्य व्यावृत्तिः । विश्रुत इत्यप्यर्थ आख्यात शब्दस्य । प्रकृतानुरोधात् ॥

समयेऽस्मिन्नोचिता निद्रा तस्या भाग्यवत्या स्तपःफलस्य महतः ॥ "मातृदेवो भवे"ति श्रुत्या "पितुःशत गुणं माते"ति स्मृत्या च प्रसिद्धं स सत्यापयति ते माता यतः "अहं वेद्मीति निवेद्यमानेऽपि परत्त्वेन तद किञ्चित्कृत्य "दुखेनोत्पादितश्चायं न रामं नेतुमर्हसि" इति त्वयि केवलमभिमन्यमानः पुत्रभावं वसिष्ठसन्धु क्षितः प्रेषितवान्कौसल्या तु केवलवात्सल्यपरापि सत्वरं सादरभरं हि प्रेषयामास। मातृवाक्यं पितृवाक्यञ्च परिपालनीयमुभयमपी त्येतं प्रशस्तं प्रवर्तयितुं धर्मं हि त्वमजनिष्ठाः [1]स्वानुष्ठानेन ज्यष्ठः पुत्रेषु तस्यामतः सा राराज्यते सुप्रजाः। पूर्वा सन्ध्या दिवाकरमिव सेयं रामं त्वां जनितवती। अतो मातरमिव सन्ध्यामुपलालय पूर्वाम्। आदित्यस्येव भवतोऽनुग्रहान्मातुः सेत्सति नियतं विरोधिनिरसने सामर्थ्यम्। अज्ञानान्धकारः प्रणष्टः साक्षात्कारश्च भगवतस्ते जातस्तस्माज्जातमद्य मे सुप्रभातम्। किं बहुना भगवतस्तवावतारेण जातः सत्त्वोद्रेक कालो लोकस्य। वत्स! समैक्षिषि निद्रालक्ष्मीमुत्कण्ठेऽहं वैकुण्ठ! प्रबोधश्रियमपि समनुभवितुम् नरशार्दूल! नरश्रेष्ठतया भवताप्युपास्या सन्ध्या। "यद्यदाचरतीति" नीतेः। आश्रितप्रतिस्पर्धिविध्वंसैकशीलस्य किमव काशोऽप्यस्ति स्वापस्य ?। भवदीयश्चाह्निकं कर्म भवदाज्ञारूपं मया कर्तव्यमात्मार्पणमपि कृतवता। तत्स्वीकुरुष्व। किञ्चाह्निकेन निर्वर्त्यमेकसुत्यात्मकं कर्म च भवत्स्वरूपमस्ति यज्ञात्मकमित्याशयानः सर्वम्—

"कौसल्या सुप्रजा राम! पूर्वा सन्ध्या प्रवर्तते।
उत्तिष्ठ नरशार्दूल! कर्तव्यं दैवमाह्निकम् ॥" इति ॥

परमोदारमृषेः श्रुत्वा वचनं स्नात्वा कृतार्घ्यप्रक्षेपौ जेपतुस्तौ गायत्रीम्। निर्वर्तितसन्ध्योपासनब्रह्मयज्ञसमिदाधानौ समिन्धानौ च जातवेदसाविव तेजसा राजकुमारावभिवाद्य च "अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि तस्य वर्धन्ते ह्यायुः प्रज्ञा यशो बलमि"ति यथामनूक्ति तपोधनमभितस्थतुरभिनन्दयन्तौ गाधिनन्दनम्। तस्माच्च प्रस्थितौ सरय्वाः शुभे सङ्गमे हृदयङ्गमां ददृशाते त्रिमार्गगां भगवतीं त्रैदशीमापगाम्। तत्र च बहुवर्षसहस्राणि दुश्चरं तपश्चरतामुग्रतेजसामृषीणामाश्रमं पुण्यं चाक्षुषयन्तौ प्रहृष्टात्मानौ भगवञ्श्रोतुमिच्छावः कोऽन्वेतमधिव सत्याश्रममिति कुतुकादित्यवोचेतामृषेश्चेतःसमाकर्षमाकलयन्तावुक्तिभङ्गीभिःश्रवणसुभगाभिः। बालकमधुरवचः श्रवणसमुल्लिषत्सन्तोषो मानुषभावनटनलम्पटताञ्चालक्ष्य सलक्ष्मणस्य तस्य विहसन्नीषदृषिरभाषत—यश्च बुधैरुच्यते काम इति स कन्दर्पः पुरासीन्मूर्तिमान्। स च तपस्यन्तमाश्रमे करिष्यमाणपार्वतीपरिणयम विच्छेदेन समाधिमन्तं, [2]गच्छन्तञ्च सम[3]रुद्गणं भगवन्तं देवेशं दुर्मेधा धर्षयामास। हुङ्कारमात्रेण दग्धस्य तदा विरूपाक्षचक्षुषा दुर्मतेस्तस्य व्यशीर्यन्त सर्वाण्यप्यङ्गानि। तदेश्वरक्रोधेन कामोऽशरीरः संवृत्तः, प्राप चानङ्ग इति प्रथाम्। तदाप्रभृति श्रीमानयमुच्यतेऽङ्गदेश इति यस्मादङ्गमत्र सन्तत्याज। तस्य च स्थाणोः पुण्योऽयमाश्रमस्त इमे च मुनयः परमात्मनस्त्वन्नामपारायणपरमरसिकस्य तस्य धर्मपराः शिष्याः सर्वेश्वरध्यान निर्धूतकल्मषाः। शुभदर्शन! रजनीमिहाद्य मध्ये सरितोर्वसेम पुण्ययोः। अभिगच्छन्तः शुचयः पुण्याश्रमपदं

---

1. अस्य प्रवर्तयितुमित्यनेन संबन्धः
2. कृतोद्वाहं समाधेः कृतव्युत्थानं कालोचितविलासदेशं गच्छन्तमिति वा ॥
3. क्रियाविशेषणम्।

निशां वत्स्यामश्च सुखमिति । तेष्वेवं वदत्सु विप्रकृष्टार्थग्रहणनिपुणेन तपो जन्यज्ञानेन ताटकादिनिरास निमित्तमागमनं विज्ञाय तपस्विनो जग्मुः परमं हर्षम् ॥

अर्घ्यपाद्याचमनीयाद्यैर्निवेद्यातिथ्यं कुशिकतनुजन्मन्यथो सदकार्षुः ऋषयः प्रीत्या रामलक्ष्मणयोरतिथि क्रियाभिः । कुशलप्रश्नश्च समनुप्राप्य विश्वामित्रात्कथाभिरम्यरञ्जयंश्चातिथीन्यथार्हं सायं सन्ध्यागमे च समाहिताः काममजपंश्च । निद्रार्थं प्रापिताः सुव्रतैश्च सह मुनिभिः स्वाश्रमं, मुनिपुङ्गवश्च भगवान्कौशिकोऽसौ धर्मात्मा नृपा त्मजावभिरामौ रमयाम्बभूव कथाभिरभिरामाभिः । विदाञ्चक्रतुश्च चक्रवर्तिसुतावरण्यमधितिष्ठतामात्मनिष्ठाना मृषिकदम्बानामार्जवमातिथेयकृत्येऽकैतवं कौतुकं सौजन्यञ्चाव्याजं प्रशंसतुरुपांसु च परस्परमेषाञ्च दर्शनं मुनिवृन्दारकेन्द्रकुशिकनन्दनदिव्यानुग्रहाधीनमिति मुदमन्तरमेयाञ्च जग्मतुः ।

ततः प्रभाते भगवतोऽरविन्दबन्धोरुदयेऽरिन्दमावरविन्दसुन्दरदृशाविन्दिरानन्दनाविव नद्यास्पति[1] द्वौ परिदृश्यमानौ कृताह्निकौ पुरस्कृत्य विश्वामित्रं नरेश्वरपुत्रावुपागमतां नद्यास्तीरं यश्च मुनि वृन्दारकेन्द्रो द्युते ऽत्यन्तमादित्यवत्कामाश्रमपदं श्रीरामपदकमलविन्यासेन कारयित्वा कृतार्थं ताटकाकान्तारमपि प्रकृत्या कान्तमप्यद्य विगीततां गमितं निष्कल्मषीचिकीर्षया राममियेषतमां मुनिहितैषी प्रापयितुम् । संशितव्रतास्ते मुनयश्च नावं काञ्चन शुभामुपस्थाप्याब्रुवत विश्वामित्रमारोहतु भवान्नावं राजपुत्राभ्यां राजमानश्च सत्कृतः । अरिष्टं[2] गच्छ मा भूच्च विलम्ब इति । तथेत्युक्त्वा तानृषीनभिपूज्य पूजितश्च जनाधिपात्मजाभ्यां कुशिकात्मजस्ततार सरितं भगवतीं भागीरथीं, याच लोकत्रयपवित्रीकरणप्रवणैरर्णोभिः प्रवहन्ती पूरयति पारावारं पत्या च शोषितं सत्या लोपा मुद्रायाः । ततः कनीयसा कनत्कनककान्तिना चेतोहरः श्रीरामः कोऽपि विद्युत्वानिवागम्य मध्येतोयं शब्दं शुश्राव समधिकसंरम्भसंवर्धितम् । भिद्यमानस्य पाथसः किमयं ध्वनिस्तुमुल इति च पप्रच्छ मुनिम् । कौतूह लात्स च धर्मात्मा कथयाम्बभूव—राम ! कैलासशिखरिणि निरमिमीत मनसा परं परमेष्ठी सरः किमपि मनोहरं श्रीमत्याः प्रकृतेरविकलैर्लीलालास्यविलासैर्निस्तुलैः । मनसा निर्मितत्वात्प्ररूयायते मानसमिति ।

तस्मात्स्रवन्ती च सरसः सा साकेतमावृत्य प्रवहते सरयूः । यतो ब्रह्मसरश्च्युता तस्मात्पुण्या कीर्त्यते सरयूरिति सरसो यौतीति । [3]येयमयोध्यायाः पश्चिमभागमारभ्य उत्तरदिग्भागेन पूर्वदिग्भागमागत्याङ्गदेशे गङ्गया सह युज्यते । सम्भेदे च तयोर्नद्योः स्थाण्वाश्रमः । तस्मात्सरयूयुक्तगङ्गातरणदशायां सरयूजलमुन्नता द्भागीरथ्यां पततीति तस्या अयं ध्वनिर्वारिसंक्षोभजनितोऽभिवर्तते पूज्याङ्जाह्नवीम् । नियतचेताः कुरु प्रणामं न दीभ्यान्ताभ्यामिति ॥ अतिधार्मिकावुभौ च कृत्वा प्रणतिं पुण्यनदीसम्भेदे रात्रिमुषित्वा प्रातर्दक्षिणाभिमुखास्तेरु र्गङ्गाम् । तीरमासाद्य च दक्षिणं महीक्षिदात्मजः क्राम्यल्लँक्ष्मणेनाक्षुद्रपराक्रमः श्रीरामोऽक्षुण्णं जनैर्वनं घोर संकाशमीक्षाञ्चक्रे । मुनिहर्यक्षमप्राक्षीदैक्ष्वाकश्च—अहो ! दुर्गमतिमात्रमेतदरण्यं झिल्लिकगणरणितं भयङ्करैर्व्याघ्र तरक्षुकण्ठीरवमतङ्गजमुखैः क्रूरमृगैराकीर्णं, कुत्सितं दारुणञ्च शब्दायमानैः शकुन्तैश्च परीतं, धवाश्वकर्णककुभमरु

---

1. नद्यादिति प्रतिनिधि प्रतिदाने च यस्यादिति पञ्चमी ॥ नद्यात्कामात् ॥
2. अरिष्टं=शुभमरिष्टं पापशुभयोरिति हलायुधः । ताटकावधाभिप्रायेणेदम् ।
3. एतदारभ्य ध्वनिरिति पर्यन्तमनुवादो गोविन्दराजोक्त्यनुसारेण ॥

तिन्दुकपाटलाद्यैः परिशोभितं मेदुरञ्च वदरीभिः किन्त्वनणु वर्तते दारुणमिति । अचकथच्च काकुत्स्थं विश्वामित्रः नरोत्तम ! पूर्वमास्तामेतौ जनपदौ प्रभूतधनधान्यौ मलदकरूशनामधेयौ देवलोकसमसंस्थानमहनीयौ च । पुरा कृते सति वृत्रसंहारेऽशुचित्वेन बुभुक्षया च व्याप्तं वासवं समाविशन्महती ब्रह्महत्या तमेतं पुरुहूतमादित्यास्सर्वे तपोधनाश्च मुनयो गङ्गादिदिव्यतीर्थेष्ववगाहयन्तः पुनर्मन्त्रपूतैः स्नपयामासुःकलशोदकैः । अस्यामेव भूम्यां [1]मलं दत्वा[2]कारूशं च शरीरजं दिविषदो देवेन्द्रस्य हर्षं ततः प्रपेदिरे । सुप्रीतः शचीपतिर्वितताार वरं "जनपदौ स्फीतावेतात्रसातां यतो ममाङ्गमलधारिणौ ततः ख्यातिमवाप्स्यतो जगति मलदाश्च करूशाश्चे"ति ॥ पाकशासन विहिताञ्च देशपूजामिमामन्वमोदन्त साधु साध्विति विबुधाः । धनधान्यादिभिः समृद्धौ काममभवताञ्च मुदिताविमौ जनपदौ द्राघीयांसमनेहसं मलदकरूशाभिधौ ।

## ॥ ताटकावधः ॥

याते च कतिपये काले कामरूपपरिग्रहा वारणसहस्रपराक्रमा परमक्रूराभूद्यक्षी कापि । याच धीमतः सुन्दस्य भार्या रामभद्र ! [3]स्ताद्भद्रं ते, ताटका नाम । यया चास्तकृत्याः स्वैरं विजिहीर्षन्ति हर्षाद्यमभटा अत्युद्भट दुश्चेष्टया विष्टपे सर्वत्र ॥

यस्याश्च राक्षसः पुत्रः शक्रपराक्रमो नाम्ना मारीचो नीचः वृत्तवाहुर्महावीर्यस्तन्वाऽतनु भयङ्करः क्रूरकर्मा विपुलास्यः पुण्यजनो भैरवाकारः प्रजास्त्रासयमानो नित्यमावसत्येनं जनपदं मलदं कारूशञ्च । दुष्टचारिणी च ताटका काकुत्स्थ ! जनपदावेतौ विनाशयति विनाऽऽशये दयालेशेन । सेयमावृत्य पन्थानं वसत्य ध्यर्धयोजने यस्मिंश्चास्ति गन्तव्यतया वनं ताटकायाः । वाहुबलमाश्रित्य स्वं जहि दुष्टामिमाम् । मन्नियोगात्कुरु देशमिमं पुनर्निष्कण्टकम् । घोरया भृशमसह्यया निःशेषमुत्सादितमनया यक्षिण्या देशमीदृशं न शक्नोति हि कश्चिदप्यागन्तुम् । दारुणञ्च वनं तथा निर्जनं कृतं तया, यथा पुनरपि न स्याद्यथा पूर्वं, सर्वं तुभ्यमभिहितं मया हितं काङ्क्षता जगतामिति ॥ अथाप्रमेयप्रभावस्य मुनिप्रभाकरस्य भुवनभविकैकभावस्य श्रुत्वा गिरमसौ रामः प्रत्यवोचत "भगवन्मुनिपुङ्गव ! श्रूयते ह्यल्पवीर्या यक्षजातिःपुराणदौ । तत्रापीयं सत्यबला कथङ्कारं धारयति बलं नागानां सहस्रस्येति मनागिव हसन् । मुनिश्च शृणु पूर्वमासीत्सुकेतुर्नाम केतुरिव शुभाचाराणां वीर्यवान्महायक्षः स चानपत्यस्तेपे महत्तपः परमप्रीतश्च पितामहोऽस्मै पत्ये यक्षाणां विश्राणयामास कन्यामणीं रूपिणीं ताटकां नाम । सिन्धुरसहस्रबलञ्चास्यायदित प्रमुदितः पद्मभूर्नतु पुत्रं कमपि यक्षाय तदभिसंहित गुणवता पुत्रेणात्यन्तं मा जगतां पीडा भूदिति विभावयन् । शुक्लपक्षक्षपाकरप्रभामिव प्रतिक्षणं प्रवर्धमानां

---

1. मलमशुचित्वम् ।
2. कारूशं क्षुधम् ॥
3. प्रथमशौर्यस्थानत्वेन शौर्यप्रसिद्धिकरत्वरूपं भद्रत्वमस्या इति ताटकानाम ते भद्रमिति भावः ॥

मानातीतरूपयौवनमनोहराञ्च दुहितरं विततार सुन्दाय जम्भनन्दनायासुरयक्षयोर्देवयोनित्वेनोचितः सम्बन्ध इत्यभिसन्धिमान् स सुकेतुः। काले च गते यक्ष्यसावजीजनदात्मजं मारीचं नाम दुर्धर्षम्। यःशापादापद्यत राक्षसभावम्। अगस्त्येन च निहते सुन्दे ताटकेयमात्मभर्तृवधजनितक्रोधान्धाभ्यधावत्सपुत्रा भक्षयितुमृषिमवाङ्मनसगोचरमहिमसमभ्युन्नतमाकारेण बत! परं ह्रस्वम्।

जातामर्षो महर्षिः स राक्षसत्वमाप्नुहीति शशाप सद्यो मारीचं, रूपमेतद्विहाय प्रतिपद्यस्व दारुणं, भव च पापे! विरूपा विकृतवक्त्रा पुरुषादिनी महायक्षीति च ताटकाम्। ततः प्रभृति सैषा शापकृतामर्षा समिद्धक्रोधमहानलात्मुत्सादयत्यदयं देशमगस्त्यचरितमेतं शुभमातङ्कास्पदं विदधत्यविरतमिति॥ अनुपदमादिदेश दशरथकुमारम्—

"राघव! महाघसमष्टिमेनां दुष्टपराक्रमां सत्यपराक्रमस्त्वं परमक्रूरामक्रूरो जहि गोब्राह्मणहितार्थाय।" शापसंस्पृष्टां ह्येनामेनसामेकराशीयमानां रघुनन्दन! त्वदृते विश्रुतवीर्यात्त्रिष्वपि लोकेषु कश्चिदुत्सहते पुमान्विनिहन्तुम्। नरोत्तम! पापीयस्यामस्यां स्त्रीवधकृते कार्या नैव घृणा करुणासागरेणापि त्वया। चातुर्वर्ण्यपरित्राणाय सता हि राजपुत्रेण कर्तव्यं भवतिनृशंसमपि कार्यं रक्षता सदा रक्षाकर्मसमृद्धिशेषत्वेन, तथा पातकं वा सदोषं वा। स्फुरत्येष हि धर्मः सनातनो राज्यभारनियुक्तानां सत्क्षत्त्रियाणाम्। काकुत्स्थ! ध्वंसय निर्दयमधर्म्यामिमां जनपदरक्षणदीक्षितः पृथुवचनञ्चेदं पृथ्वीं प्रति "स्त्रीवधे त्वं महापापं किन्नरेन्द्र! न पश्यसि। येन मां हन्तुमत्यर्थं प्रकरोषि नृपोद्यम"मिति रुदन्तीं, "एकस्मिन्यत्र निधनं प्रापिते दुष्टचारिणि!। बहूनां भवति क्षेमस्तस्य पुण्यप्रदो वधः" इति मनस्यनुसन्दधानः। यत्तु गौतमधर्मे "अनात्रेय्याश्चैवमिति" स्त्रीवधे पापमुक्तं तददुष्टस्त्रीवधविषयमिति च गृहाण। स्वपुत्रे च शुक्रे निर्जरनिजिघृक्षया तपस्यति सति रुद्रसमीपे, दैवैर्भृशमर्दिता असुराः शुक्रमातरं शरणमगच्छन्भृगोः पत्नीम्। सा चासुरपरित्राणार्थमुद्युक्ता हन्तुं देवान्। ताञ्च महेन्द्रप्रार्थितो विष्णुरासाद्य शिरस्तस्याश्चकर्तेति च श्रूयते। राजपुत्र! बहुभिरेतैरितरैश्च महात्मभिः पुरुषसत्तमैर्हता नार्योऽधर्मसहिता बह्व्यः क्षेमाय भुवनानां महत इति। "यथा परशुरामस्य जमदग्नेर्गुरोराज्ञया मातृवधेऽपि न दोषस्तथा बलातिबलादिदातृत्वेन गुरोर्ममाज्ञया स्त्रीवधे तवे"त्यभिसन्धाय चख्यौ "तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान्नृपे"ति॥

मुनेर्व्याहारमक्लीबमुपश्रुत्य नरवरात्मजः प्राञ्जलिः प्रतिजगाद राघवः। कौशिकवचनं त्वया वश्यकर्तव्यमिति पितुर्वचननिर्देशात्पितुर्वचनबहुमानाच्च सज्जोऽहमस्मि कर्तुं यथाभवदाज्ञम्। यतोऽहमन्वशिष्येऽयोध्यायां गुरुमध्ये गुरुणा पित्रा दशरथेन नावज्ञेयं कथञ्चन तद्वच इति। शासति च भवन्तो [1]ब्रह्मवादिनः। किमु वक्तव्यं जाग्रति शासनयोर्द्वयेऽतोऽवश्यं करिष्यामि ताटकावधमेनमनुत्तमं मा भूत्संशयः गोब्रह्मणहितार्थाय देशस्यास्य सुखायागस्त्यसंस्तुततया महितस्य यशः प्राप्तिरूपभवद्धिताय भवच्छिष्यत्वस्फोरणाय च कर्तुमुद्यतोऽस्मि वचनमप्रमेयस्य भवत इति।

---

1. अनेन विश्वामित्रस्य ब्रह्मवित्त्वं बोधितं भवति रामब्रह्मणैव॥

उदीरयन्नेवमरिन्दमो वध्वा मुष्टिं धनुर्मध्ये दिशः पूरयञ्शब्देन समतनुत समाम्नायाध्ययनमारिप्समान इवोङ्कारमतिगभीरमिदम्प्रथमतया भाविसमग्रसङ्गरस्तीव्रं ज्याया निर्घोषं वर्षणोन्मुख इव प्रावृषेण्यः स्तनयित्नुः सजलजलदश्यामलस्ताण्डवयितुं तमाखण्डलं मुनीनामिव शिखण्डिनं चण्डरश्मिवंशमण्डनः श्रीरामः। शब्देन च तेन महता वित्रस्तेषु वनवासिषु ताटकेतिकर्तव्यतामूढा शब्दश्च यतो विनिःसृतस्तं देशं निश्चित्य क्रोधमूर्च्छिता वेगादभ्यद्रवत्। दृष्ट्वा च राघवोऽतिमात्रभयङ्कराकारां तालदघ्नीं लक्ष्मणं बभाण। पश्य दारुणं भैरवञ्च वपुर्यक्षिण्याः। दर्शनादेवास्या ध्रुवं विदीर्येरन्हृदयानि भीरूणाम्। स्वतो बलवतीं मायोद्बलिताञ्च दुराधर्षां पश्य पुराकरोमि हृतकर्णाग्रनासिकतया विनिवृत्ताम्। स्त्रीस्वभावेन परां रक्षितां न हन्तुमुत्सहे, वीर्यमस्या गत्या नाशयितुकाम इति। अभिसंहितवांश्च संहत इव कोऽपि धर्मसमुच्चयः—"सहसा न कर्तव्यतामर्हति स्त्रीवधः। प्राथम्येन क्रियते विरूपकरणादिरूपं स्त्रीदण्डनम्। तेन चातिक्रुद्धा स्वयमेवा गमिष्यत्याततायिनी तदनु हनिष्यामि ताम्। एवंह्यनुगृहीतं भवत्याततायिनमायान्तं हन्यादेवाविचारयन्निति धर्मशास्त्रमनेन लोकापवादोऽपि भविष्यति परिहृतस्तथा पालिता भवति गुर्वज्ञापी"ति विरूपकरणमनुमोदयितुमिव समदृश्यत लक्ष्मणं प्रवर्तमानो व्यवहरन्राघवः। एवं ब्रुवाणे च रघुवृषभे क्रोधमूर्च्छिता च सुकेतुसुता सद्य उद्यम्य दोषौ[1] सदोषौ च साधुनिधनापादनेन गर्जनैस्तर्जयन्ती राममेवाभ्यधावन्मानुषबुद्ध्या दुर्धर्षत्वेन विसृज्य विश्वामित्रम्। भगवान्विश्वामित्रश्च ब्रह्मर्षिर्हुङ्कारेण तामभिभर्त्स्य [1]स्वस्तिमुक्त्वा जयञ्चाभ्यभाषत। रजो घोरमुत्किरन्ती राघवावुभौ ताटका सा मुहूर्तममूमुहत्। ततोऽन्तर्धानशक्तिमास्थाय शिलावर्षेण [2]तावपिपीडत्। शरवर्षेण च क्रोधा त्प्रतिहतेऽश्मवर्षेऽभिधावन्त्याः करौ पत्रिभिश्चिच्छेद राघवः। तदनु च्छिन्नभुजां श्रान्तां परिगर्जन्तीमभ्याशे क्रोधादकृत सौमित्रिर्हृतकर्णाग्रनासिकामिदम्प्राथम्येन, प्रथांयास्यन्निवैवंकर्मणि [3]भूयोऽपि भूयोलक्ष्मीवांस्तदानीमपि श्रीमान्रामानुजः। पुनरपि कामरूपधरणशक्ता नैकशो दधाना रूपाणि गतान्तर्धानं व्यामोहयन्त्यश्मवर्षं कुर्वती भैरवं विचचार।

वीरौ पुनश्चक्रतुश्चक्रवर्तिसुतौ वज्राशनिसमं ज्याघोषम्। येन मोहितापि शब्देन तेन, चिराल्लब्धचेतना पुनःसमुदयुङ्क्त समन्ततः कर्तुं दृषद्वर्षम्। पश्यंश्च कौशिकः श्रीमान्स्वत एव ताटकावधहेतुप्राप्तिकृतहर्षातिशया दृषिः समगिरत राघवम्—"प्रच्छन्नमश्मवर्षं कुर्वतीयमसती यज्ञविघ्नकरी यावद्वर्धिष्यते मायया तावदेव हन्यतां यतः सन्ध्यापि पुराभवति। रक्षांसि खलु सन्ध्याकालेषु विशेषतो भवन्ति दुर्धर्षाणि। अतो मा विलम्बो भूदि"ति।

इत्युक्तश्च रामस्तदाश्मवृष्ट्या यक्षीमभिवर्षन्तीं शब्दवेधित्वं दर्शयन्नरौत्सीत्तां स सायकैः। मायाबलसमन्वि तापि रुद्धात्यन्तं शरजालेन विनदन्त्युच्चैस्तरां राघवं च ससौमित्रिमभिदुद्राव। अनुपदमशनीमिव[4] विक्रान्तामाप

---

1. अनव्ययम्।
2. भ्राजभासेतिवोपधाह्रस्वः।
3. दोषौ=बाहू॥
4. सर्वतोऽक्तिन्नर्थादित्येक इति ङीष्।

तन्तीञ्च जवादुरसि [1]शरेण विव्याध राघवः, येन सपदि निपत्य सा [2]ममार । अहङ्कृतिमिव सर्वसंसारदुःखास्पदं संवर्तरात्रिमिव लोकभयङ्करां विनाशपिशुनामिवोत्पातपरम्परामविद्यामिव श्रेयःपरिपन्थिनीमश्रियमिव भृशंकुत्सिताम कीर्तिमिवोद्वेजयित्रीं यातुकेतुलक्ष्मीमिव देवद्विजसुदुस्सहां खलवैदुषीमिव प्रदूष्यां श्मशानभुवमिव सुदूरतः परिहर्तव्यां स्त्रीस्वतन्त्रतामिव संपत्सन्तर्जनीमित्वरीमिव कुलविनाशकारिणीं तां निपातितां दृष्ट्वा भीमसंकाशां पाकशासनमुखाश्च काकुत्स्थं साधु साध्विति ध्वस्तसाध्वसाः समपूजयन्बर्हिर्मुखाः । समेत्य च प्रोचुः शचीपतिं पुरस्कृत्य, विश्वामित्रं विन्दमाना नन्दथुमथो अभ्यधिकम् । मुने ! कौशिक ! भद्रं ते । सेन्द्रा मरुद्गणा वयं सन्तोषिताः कर्मणानेन । आतः प्रवर्तय स्नेहकार्यमस्मिंस्त्वरितं दाशरथौ । प्रजापतेः कृशाश्वस्य तपोबलभृतः सत्यपराक्रमान्पुत्रान्निवेदय राघवेन्द्राय । तव शुश्रूषणादौ स्थिरधीरयं सानुजो भ्राजते पूज्यं भाजनम् । राजसूनुना कृते क्रतुभुजां यत्कर्तव्यं तदनेन सुमहदनुष्ठितं कार्यं रोचयामहे प्रीताः परममेनमि"ति । प्रहृष्टेषु च गतेषु यथागतं सुमनःसु प्रावर्तत सन्ध्यापि । ततस्ताटकावधतोषितो मुनिवरः प्रीतो मूर्धन्युपाघ्राय नरव्याघ्रं राघवं, शुभदर्शन ! वसेमेहाद्य रजनीं मम तदाश्रमपदं श्वःप्रभाते गमिष्याम इत्यभाषत । तथेति दाशरथिस्तदैव मुक्तशापं चम्पकाशोकपुन्नागमल्लिकाद्यै श्चूतैः पनसैः पूगैर्नारिकेलैश्च शोभितमलङ्कृतञ्च वापीकूपतटाकैर्विहारदीर्घिकाभिरुपशोभितं मल्लिकाहेमकूटैश्च मण्टपैः चैत्ररथमिव रमणीयमधिवसंस्तत्ताटकावनं तां निनाय रमयन्मुनिं यामिनीम् । विनिहत्य यक्षसुतां प्रशस्यमान सुरसिद्धसङ्घै राघवो मुनिना सहैव निवसन्प्रभातवेलायां प्रत्यबोध्यत ।

## ॥ श्रीरामलक्ष्मणाभ्यां विश्वामित्रेण नानास्त्रमन्त्रदानम् ॥

अथर्षिरुषित्वा रात्रिं तां प्रबोध्य च कृतमन्दहासो गाधिनन्दनो मधुराक्षरं प्रोवाच राघवम् । राजपुत्र! महायशः काममहमस्मि परितुष्टः । प्रीत्या च युक्तः परमया प्रदिशाम्यस्त्राणि सर्वशः प्रशस्तचरित्रमहिताय ते समन्विताय च भ्रात्रा शोभनेन । सगन्धर्वोरगराक्षसान्देवासुरस्तोमानपि यैः प्रसह्याजौ जेष्यसि सुराज्ञः श्रीकुमार! तानि वितराण्यहं सहस्रशो दिव्यानि स्फुरत्तराण्यस्त्राणि प्रतिगृहाणेत्युदीरयन्मुनिबृन्दारकेन्द्रः [3]सह सर्वैरायुधै ब्रह्मास्त्रं दण्डमस्त्रञ्च धर्मचक्रं कालचक्रं विष्णुचक्रं शाक्रञ्च दारुणं वज्रं शार्वं शूलं गदे द्वे च कौमोदकशिवोदके ब्रह्मशिरश्चोग्रमैशीकं शङ्खमद्भुतंत्रिणेत्रास्त्रं धर्मपाशं कालपाशं सवारुणं शुष्कार्द्रे पाचने नागास्त्रं वैष्णवमाग्नेयं शिखरं नाम वायव्यं क्रौञ्चमद्भुतमस्त्रं हयशिरश्चोग्रशक्ती शक्रकुमारयोर्घोरं कङ्कालमुसलं कपालं किङ्किणीं दिव्यास्त्रं नन्दकं खड्गं गन्धर्वास्त्रञ्च मोहनं प्रस्वापनं प्रमथनं वर्षणञ्च सशोषणं सन्तापनं विलापास्त्रं दमनञ्च मनोभुवो नैषादं मानव

---

1. स्त्रीवधानादरसूचनाय शरनामनिर्देशाभावः ।
2. श्रीसद्रामायणे "सापपातममारचे"ति । तत्र, अपगतः पातोयस्मात्सः अपपातस्तं यद्गत्वा न निवर्तन्ते तद्धाम परमं ममेति स्मृतेः एवञ्चापपातं अं वासुदेवं, आर जगाम मोक्षं प्रापेत्यर्थमाहुः ॥
3 यथारामायणमञ्जरि सङ्क्षेपोऽस्त्राणां कृतः ॥

नाम वामनञ्च सशामनं संवर्तं सौमलं सत्यं मायास्त्रं मोघतेजसं सोमास्त्रं शैशिरं त्वाष्ट्रं दारुणास्त्रं भगस्य च रौद्रास्त्रञ्चेति सर्वाण्यप्येतान्यन्यानि च प्रमुदितो व्यशिश्रणत्पार्वणचन्द्रमिव रत्नाकरो रघुवरमुद्वीक्षमाणः । पुरस्तात्प्रत्यक्षतामुपगतानि प्राप्तानि च मुनेरथ दशरथात्मजः सजृम्भकरहस्यानि ससंहाराण्यशेषतश्चादरभरपरिपूर्णेन सस्पृश्य पाणिना प्रतिपूज्य च विससर्ज । दिव्यभास्वरशरीराश्चन्द्रार्कसदृशा नैकाकाराश्चास्त्रग्रामाः प्रह्वाः साञ्जलिपुटा मधुरभाषिणोऽब्रुवत श्रीरामं शाधि किन्ते करवामेति । रामेण च मानसाः कार्यकालेषु करिष्यथ मे साहाय्य मधुना गम्यतां यथेच्छमित्यनुजज्ञे ॥

## ॥ विश्वामित्रेण रामंप्रति सिद्धाश्रमवृत्तान्तकथनं, रामवचनद्दीक्षाप्रवेशः मारीचस्याब्धौप्रक्षेपः सुबाहुप्रभृतीनां वधश्च ॥

ततः शासनान्मुनिपाकशासनस्य ब्रह्मवादिनः सत्यवादिनामग्रिमः कुमुदबन्धुबन्धुरवदनो मदनसुन्दरः सन्दरस्मितः सौभ्रात्रसौभाग्यैकविश्रममन्दिरायमाण इन्दिरा[1]रमणरमणीयः [2]परमहंसवराङ्घ्रिसरसीरुहवरिवस्यैकरसिकतया सत्त्वोद्रिक्तमानसोल्लासः सर्वास्त्रान्वरीयसः संहारांश्च विनिवेदयामास गरीयसे भक्तिमत्स्वनुजायापि मनुजाधिपात्मजः श्रीरामः । भूत्वास्त्रशस्त्रज्ञानभानुर्भानुकुलजलधिकौस्तुभो गच्छन्नेव मुनिकौस्तुभमच्छमतिः पप्रच्छ रघुपतिः श्लक्ष्णया गिरा च मधुरया । भगवन्निबिडनिबिडतरुषण्डपरिमण्डितमिदमाश्रमपदं हि लोक्यते लोचनफलं कलयदतिवेलम् । श्यामा चेयमरण्यश्रीस्तालतमालादिभिर्द्रुमैर्मुदममेयां निवेद्यात्मनो नृत्यतीवात्यन्तमुद्धूतैर्विटपैस्साटोपमटता मलयपवनेन हस्तैराह्वयेव वल्गुव्याहरणैः पक्षिणां भणित्वा स्वागतं सह मनोहरणैर्हरिणैरभ्यर्च्य च मणी[3]चकैः स्रवन्मधुभिरुदञ्चच्चञ्चरीकैरमृताभ्यधिकमधुरैरातिथेयीबुभूषयेव निरुपमसुषमा फलैश्च पचेलिमैः ।

दिष्ट्या निरसार्ष्म वयमृषिवृषभ ! रोमहर्षणात्तस्मात्सुकेतुतनयाया अनयाया भयङ्करात्कान्तारात् । परममाप्यायनमिदं भवति नयनयोरिव मानसस्यापि दर्शनमस्याश्रमपदस्य । शंस मे भगवन्बुभुत्समानस्य कौतुकातिशयवशात् कस्यायमाश्रमः । पापा ब्रह्मघ्ना दुरात्मानश्च दुष्टचारिणः कुत्र प्रदेशे यज्ञं भवतो विघ्नन्ति या क्रिया परित्रातव्या पवित्रा निहत्य मया राक्षसानिति ॥

---

1. आरमणं=विहरणमित्यभ्यर्थः ।
2. परमहंसो विश्वामित्रः ।
3. मणीचकः प्रसूनम् ॥

विश्वामित्रोऽथ सिद्धाश्रमस्य सार्वदिकभगवत्सन्निधानप्रभावात्स्थाण्वाश्रमवद्दिव्यदेशत्वमत्र पूर्वेषां सन्निधौ भगवतः सिद्धतपस्कत्वमतो वस्तव्यत्वञ्च व्याचिख्यासुस्तद्वनञ्च मानुषभावनया स्वं पूर्ववृत्तमज्ञातमिव परिपृच्छतोऽस्याप्रमेयस्य कौसल्येयस्य कुशलो वक्तुमुपचक्रमे ।

इह राम ! महाबाहो ! प्रभुर्भगवान्देवानां विष्णुः स बहून्हायनांस्तथा युगशतानि च तपश्चरणयोगयोः सिद्ध्यर्थं लोके प्रवर्त[1]नाय च श्रीमति बदरिकाश्रम इव नारायण उवास सुमहातपाः ।

स एव पुनर्वामनरूपेणात्र तपश्चचार । उभयात्मना यतोऽत्र महातपाः प्रापत्सिद्धिमतः ख्यातः पूतोऽयं देशः स्फुरति निरुपमः सिद्धाश्रम इति । विष्णोस्तपश्चरणकाले हि प्रह्लादस्य पौत्रः सूनुश्च विरोचनस्य रोचमानो दानवेभ्यो समरुद्गणं निर्जित्य जिष्णुमपजहार तद्राज्यं प्राज्यमूर्जस्वलं च निजभुजबलमतुलमवलम्ब्य बलिर्दैत्यानाञ्चक्रवर्ती । स च महाबलिरसुरेन्द्रश्चक्रे यज्ञं कमपि महान्तमारिरात्सया परमेश्वरमादिनारायणमिन्द्राद्यात्मना प्रादुर्भूय फलप्रदं श्रद्दधत्सुतरामित्युदीरणक्षणमेव देवद्विषः कथं यागाद्युपपद्येतेति पिपृच्छिषुर्लक्ष्मणो यावदैक्षतैक्ष्वाकस्य मुखं तावदेव गाधिनन्दनोऽयमग्रणीरिङ्गितज्ञानामभाषिष्टापमार्ष्टुं संशयं संशितव्रतः । रघुपरिवृढ ! कर्मदेवा आजानदेवा इति च द्विविधा भवन्ति देवाः । तत्र ये कर्मणा देवत्वं प्राप्तास्त आद्याः । इतरे तु यज्ञमन्त्रार्थभूता मन्त्रेण नित्यसंबद्धाः कर्मदेवेभ्यः प्राचीना एवेति कर्मदेवानां द्वेष्यत्वेऽप्याजानदेवानां यज्ञे भवत्यवश्यतर्पणीयता । यज्ञादीनां विघ्नमपि कुर्वते कर्मदेवा एव । यज्ञादिष्वविकारविरहोऽप्याजानदेवानामेव, स्वयष्टव्यदेवतान्तराभावात् । कर्मदेवानान्त्वस्त्येव । अत एवेन्द्रदीनामपि काममुपपद्यते यज्ञादिश्रवणम् । हन्त ! विस्मापयेते अज्ञमानुष्यकाभिनयनिपुणिमानमिमौ पुरस्तादपि ममेत्यन्तरेव नियच्छन्स्मयमुपरि कथयामास । तदानीञ्जातवेद प्रमुखाश्च बर्हिर्मुखा भगवन्तमुपगम्य विष्णुमिहैवाश्रमे प्रार्थयाञ्चक्रिरे । विष्णो ! वैरोचनिरद्यबलिर्बलवता संविधानेन कुरुते यज्ञमनुत्तमम् । क्रतुसत्तमश्चायं यावत्परिसमप्स्यति तावदेव कार्यं निर्वर्त्यतामात्मीयम् । यतोऽयं समाप्तक्रतुरजय्यतां गमिष्यति । स हि यजमानो गोभूधान्यहिरण्यादि याचितृभ्यः प्रयच्छति कौतुस्कुतेभ्यः समस्तेभ्यः प्रियतरं यद्यत्तत्सर्वं प्रीत्येति वयमवगच्छामः ।

तस्मिन्नयमत्युदारभावोऽनन्यलभ्यः सञ्चकास्त्युपलभ्यमानः कामं विस्मापयमानश्च मानातीतः । स त्वमादित्यानां हितकृते नः शक्तिं विष्णुताच्छादिकामवष्टभ्य भो विष्टरश्रवस्ते मायाभिधानामधीनताङ्गतः कारुण्यस्यासाद्य भूत्वा वामनः कोऽपि परवशायितुमीशेनाशेषसुषुमेण वेषेण बलिनमुपगम्य बलिं याच्ञापदेशेन तद्राज्यमपहृत्य प्रयच्छास्मभ्यमिति ।

अस्मिंश्च देवप्रार्थनावसरेऽदित्या सहितः कश्यपः समाप्य दिव्यवर्षसहस्रसाध्यं विष्णूद्देशेन कृतं व्रतं, वरदानायात्र स्वामदृश्यतां हित्वा सन्निहितं विष्णुं देवीसहायः सन्नास्तावीद्भगवानमधुसूदनम् । प्रभो ! वेदबोधित

---

1, अस्य तपश्चरणयोगयोरित्यनेनान्वयः ।

निष्कामकर्मसमनुष्ठानात्मकतपोजन्यचित्तनैर्मल्यप्रभवदिव्यज्ञानेन यः शक्यते प्राप्तुं, यस्य च तपःस्फुरति कृत्स्नं शरीरं, यश्चावाप्तसमस्तकामत्वादकामोऽपि स्वयं तपः कुरुते लोकशिक्षणार्थं, यस्य च ज्ञानलक्षणमेव स्वरूपं तपः परमं, तमहं त्वां भगवन्विलक्षणं बद्धमुक्तोभयावस्थाज्जीवात्पुरुषोत्तमं सर्वकर्मसमाराध्यं सर्वकर्मफलप्रदं सर्वकर्म स्वरूपं ज्ञानमूर्तितया समस्तहेयप्रत्यनीकसत्यज्ञानानन्दाद्यपरिमितगुणगणपरिपूर्णं तपसा साक्षात्करोमि। चेतना चेतनात्मकञ्जगत्समस्तमपि दृश्यमानं न भवति भवद्व्यतिरिक्तं "न किमपि तत्र, यत्रास्ति समस्तमि"ति नीत्या। अतस्त्वमनादिरनन्तश्च कालापरिच्छिन्नस्ततोऽसि च परिच्छेत्तुमेतावानित्यशक्यः। सर्वभावेन त्वामहं प्राप्तः शरणं त्रायस्व वैनतेयकेतनेति। प्रसन्नः सन्नच्युतः प्रोवाच मारीचं कश्यपं प्रीतोऽस्मि स्वात्ते भद्रं वृणु वरमभि लषितं वितरिष्यामीति। याचमानानां देवतानामदित्या मम च कृते दैत्यारे! सुप्रीतो वरं दातुमर्हसि त्वं वरदः। भगवन्प्राप्नुहि पुत्रभावमदित्याश्च मम। असुरसूदनस्य भवता[1]यवीयांस्त्वं भ्राता। शोकार्तानाञ्च कर्तुमर्हसि साहाय्यं[2] देवानाम्। श्रीनिवास! प्रसादेन तव यतः सिद्धफलं मत्तपश्चरणं यस्माच्च पुत्रत्वमपि तव सिद्धमजननस्य तस्मादयमेष्यति देशः सिद्धाश्रम इति ख्यातिमित्यवृणीत वरं परमभागवतोत्तमः कश्यपः अथ विष्णुरदित्यामजायत महातेजाः कोऽपि वपुषा वामनो वेषेण भिक्षुकश्छत्रकमण्डलुमण्डितः पण्डितश्छलने चलने च चरणयोर्दर्प[3]कार्भकः। यश्च पश्यतां चित्रीयमाणान्तरङ्गरङ्गभूमिषु किमपि चित्रयितुमुत्सुकः स्वैरमनृत्यद्विचेष्टितै रनृतवामनभावोऽपि सुभगः। यस्य प्रसादं हन्त! त्रैलोक्यमपि वर्तते याचमानं स भगवान्पराधीनताङ्गतो भक्तानां याचितुं ह्रिया सङ्कुचितगात्रतयेव श्रितो वामनतामाससाद दीप्त्या दिशः सर्वा भासयन्नपर इव भास्वान मेयात्मापि प्रादेश[4]द्वयसो यजमानं वैरोचनिम्। दृष्ट्वा तमसुरराजेन्द्रोऽपि वामनं विस्मयमानस्त्यागस्य च भगव दुद्देशेन क्रियमाणस्य प्रभावात्प्राप्तदिव्यचक्षुर्माधव इति चाक्षुषयन्सन्तोषातिशयपरवशतामृच्छन्नानर्च वैधीमाश्रित्य पद्धतिं धर्मविच्छ्रद्दधानः। हरिरप्यूचेऽनीचं महाराज! राजतेतरां परमशोभनस्ते यज्ञराजः। कामं हृष्यामः। त्यागिनामुपगम्य त्वामग्रतस्सरं वयमात्मानं सम्प्रति सम्प्रदानीचिकीर्षाम इति। बलिरप्यलं हर्षुलो व्याहार्षीद्धृषी केश! वमन! काममस्मि कृतार्थः सफलश्च मे यज्ञः संवृत्तः। धनधान्यौघं रत्नराशिं भूषणगणं ग्रामं नगरं राष्ट्रं वा यानं हस्त्यश्वरथप[5]त्तीर्वान्याश्च याः का अपि सम्पत्तीः किम्बहुना सर्वस्वमात्मानमपि वा समर्पयितुमीश्वरोऽस्मि कृपया तवेश्वरस्य पृच्छ यथेच्छमिति। पुरुषोत्तमश्चेत्थमभिहितः किं नः प्रयोजनं राजेन्द्र! निर्दिष्टैरेतैर्भवता, यदस्मत्पादत्रयाक्रान्तयैव परं वसुन्धरया स्मो वयमद्यत्वेऽर्थिनः संवृत्तास्तावता तृप्यन्तश्चेति जगाद भगवान्गदाधरः।

असुरोत्तमोऽपि कृत्वा स्मितमन्वमनुत वामनोक्तं येथेष्टं पूर्तिमृतीयते ब्रह्मंस्तत्करोमीति। विनिश्चिन्वत्य सुरसत्तमे प्रदातुं वामनाय वसुधां, तं निवार्य महाराजं स प्राह द्विजोत्तमः सन्नपि शुक्रः स्वार्थसार्थ इव

---

1. तुह्योस्तातङ्ङाशिषि हेस्तातङ्।
2. बलिवञ्चनात्मकम्॥
3. दर्पकः=मन्यथः।
4. प्रमाणेद्वयसच्प्रत्ययः।
5. रथान्तं सेनाङ्गतयैकवद्भावं कृत्वा, तेन च पत्तिशब्देन बहुवचनान्तेनेतरेतरद्वन्द्वः। हस्त्यश्वरथपत्तीरिति रामायणे प्रयोगः॥

कश्चिच्छरीरी। विरिञ्चिभवशक्रमुखाः सुरासुराः सर्वे योगिनश्च यं न जानन्ति समे च समाम्नायास्तमेतं विद्धि विष्णुं सनातनं पुमांसमपांसुलानां धुरि परिगणनीय! वञ्चनया भवत्तोऽपहृत्य पृथ्वीं कृत्स्नां किम्बहुना जगत्त्रयीमपि दातुकाम एव पुरन्दरायायमुपागतः स्वीकृतवामनतनुर्जागृहि मा दाने मनः कृथा इति यथाराजनीति। स्वामिनि च यजमाने मनागप्यच्यवमाने विनिश्चयाच्छुभेच्छावनच्छमतिमसुरपुरोहितं गृहीत्वा गरुत्मांश्च महाबलस्सत्व रन्ताडयामास। विन्ध्यावलिनाम्न्या च सत्या स्वपत्न्या यजमानो महाबलिर्यदि मायारूपेण देवेश एव मम यज्ञज्ञतर्हि सम्पन्नं यज्ञसाफल्यमभूदविकलमित्यभिनन्दन्ब्रुवाणश्च तथा वितरीतुं भगवते प्रववृते। उदकमदित मुदितमनाः सदारः सदारममाणाय त्यागिनामन्तःकरणे महाबलिर्लीलावामनाय महात्मने प्रभो! तव पादत्रय परिमितामद्य गृहाण मेदिनीमिति मोमुद्यमानः। तदनु विश्वरूपधरो हरिः प्रववृधे तत्रैव येन पूर्णमभूत्त्रय ञ्जगताम्। वामनरूपेण क्रमांस्त्रीन्निक्षिप्त्वा लोकात्मतया सर्वलोकव्यापिना शरीरेण च क्रान्त्वा तृतीयक्रमस्या लाभात्स्थानस्य बद्ध्वा च तं क्रतौ सौत्येऽह्नि वरुणपाशेन तदभ्यर्थनयैव तन्मूर्धनि निदधानस्तार्तीयीकमङ्घ्रि समनुगृह्णंश्च भक्तावतंसं बलिं "एष मे प्रापितः स्थानं दुष्प्रापममरैरपि। सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः॥ तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम्। यत्राधयो व्याधयश्च क्लमस्तन्द्रा पराभवः॥ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम्। सदा सन्निहितं वीर! तत्र मां द्रक्ष्यते भवान्॥ तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनङ्क्ष्यतीत्यादिभिर्दिव्यैर्वरैः,[1] प्रतिगृह्य त्रैलोक्यं तस्मात्पुनः शक्रसाद कृत चक्रपाणिः। मातापित्रोरदितिकश्यपयोस्तृप्तिं परं कामयमानो निग्रहच्छलेन सम्यगन्वग्रहीद्बलिं त्यागि नामनुत्तममपेक्ष्य कर्मदेवेभ्यो गुणगणैर्वरेण्यं निजाङ्घ्रिसरोजचञ्चरीकायमाणं लक्ष्मीरमणः। त्यागिता हि जयत्युच्चैस्तरां कापि पताकिनी विविधानां धर्मश्रियाम्। श्रीराम! श्रमनाशनोऽयमाश्रमो वामनस्य तद्भक्तेन मयोपभुज्यते चिराय। एनदाश्रमपदं ह्यनेनो मनोज्ञं पुष्पवनमिवाशीविषाः श्रयन्तः पिशिताशा विघ्नकारिणो हन्तव्याः पुरुषव्याघ्र! भवता क्रूरा व्याघ्रादिभ्योऽपि॥ तात! तवाप्येतदाश्रमपदं यथा मम। एतमितं युवा माश्रममिति वदन्नतितरां प्रीतः सलक्ष्मणं हस्ताभ्यां गृहीत्वा राघवमादरेण प्रविशन्मुनिर्व्यरोचत भगवाञ्शशीव विगतनीहारः पुनर्वसुसमन्वितश्च॥ सिद्धाश्रममध्यासीनाश्च मुनयः प्रीत्यतिशयादुत्पत्योत्पत्य पूजयितुमुद्युञ्जानाः सराजपुत्राय यथार्हं विश्वामित्राय चक्रिरेऽतिथिसत्क्रियाम्। मनुष्यभावनया मुहूर्तं विश्रान्ताविव भूत्वा रघुनन्द नावरिन्दमाववादिष्टामष्टाङ्गपातञ्च प्राणिपत्य प्राञ्जली तपसोज्ज्वलं मुनिशार्दूल! अद्यैव दीक्षां प्रविशतु भवान्भद्रमस्तु सिद्धाश्रमश्चायं त्वद्यज्ञसिद्ध्या काममश्नुतामन्वर्थतां भूयोऽपीति। नियतेन्द्रियो नियतश्च ततः प्रवि वेश दीक्षां विश्वामित्रोऽपि। कुमारावपि रात्रिमुषित्वा तां सुसमाहितावुषसि प्रबुध्य[2] स्वयमेव सन्ध्यामुपास्य च पूर्वामभिगम्य गाधिनन्दनमवन्देतामौपासनहोमकर्मणि व्यापृतवन्तं "नाग्निहोत्रं न दर्शपूर्णमासाभ्यां यजत" इति दीक्षामध्ये निषेधादग्निहोत्रस्य॥

---

1. दिव्यैर्वरैरित्यस्य पूर्वेण समनुगृह्णन्नित्यनेनान्वयः।
2. विश्वामित्राह्वानं विना।

प्रार्थयाम्बभूवतुश्च भगवन्ब्रूतां भवांस्तत्क्षणं यस्मिंश्च संरक्षणीयः क्षणदाचरेभ्यः क्रतुस्तवाप्रमाद्यद्भ्यामावाभ्यामिति। युयुत्सया त्वरमाणावेवं ब्रुवाणौ च प्रीताः सर्वे प्रशशंसुर्मुनयो नृपात्मजौ। भो राघवौ! वित्तं युवामेकाग्रचित्तावद्यप्रभृति षडहोरात्रं रक्षतमेष च गतो दीक्षां मुनिरुपगमिष्यति मौनितामयं हि सत्रविशेषः सप्तरात्र निर्वर्त्य इत्युदीरयाञ्चक्रिरे च। तथेत्युपासामासतुरतिमात्रमवदधतावनिद्रावरिन्दमौ षडहोरात्रं त्रातारौ नरवर पुत्रौ विश्वामित्रं मित्रमपि न्यक्कुर्वन्तमिव द्योतमानम्। षष्ठेऽहनि च युयुत्सया काकुत्स्थः सौमित्रिं याव त्समगिरत यत्तो वर्तस्वेति तावदेव वेदिः प्रजज्वाल सोपाध्यायपुरोहिता सदर्भचमसस्रुक्का ससमित्कुसुमोच्चया च। संप्रावर्तत क्रतुश्च यथान्यायं यावन्मन्त्रवांस्तावदेव प्रादुरासीदाकाशे महाञ्शब्दः श्रवणभयङ्करः।

मलीमसा वृत्तिविलासा इव मानसं मेचका जलमुच इव चाकाशमशिश्रियन्नश्रीका भीमसङ्काशा भूरितरां शब्दायमाना यमायमाना इव मुनीनां नक्तञ्चराः सह सहस्रशः सुबाहुमारीचाभ्यामतिनीचाभ्याम्। सपदि ववृषुः [1]सामिषं रुधिरधारा धाराधरा इव तारापथादभितो यज्ञवेदिकामभिगन्तुमशक्ता रक्षोघ्नमन्त्रजपप्रभाव भीरवः क्रूरकर्माणः। तस्मिंश्च क्षणे काममाशुशुक्षणिरिव समिद्धः क्रुधा व्योमदत्तदृष्टिरभाषत रामभद्रः, पश्य लक्ष्मण! पिशिताशनपाशानिमाननिलेन घनानिव मानवास्त्रेण कलयामि विशकलितानिति तदानीमपि हन्त! घृणापूर्णतया प्राणवियुक्तान्कर्तुमनीहमानः सज्यं धनुः करे दधानः। बालभाषितमिति परिहसन्तौ यावदुपरि लक्ष्यीकृत्य विश्वामित्रवेदिमभ्यधावतां तौ तावदेव रघुवीरः परमभास्वरं सङ्क्रुद्धश्चिक्षेप व क्षसि मारीचस्य मानवमस्त्रम्। समाहतश्च तेन परमास्त्रेण स क्षिप्तः पूर्णं योजनशतं सागरसंप्लवे। भाविकार्यान्तर साधनार्थमग्रंस्तं लक्ष्मणाय समदर्शयत्सौमित्रे! पश्य विचेतनमर्णसि विघूर्णमानं शीतेषु बलादर्द्यमानममानं मारीच मवियुज्यमानमसुभिरिति। ततस्संगृह्यास्त्रं दिव्यमद्भुतञ्चाग्नेयं चिक्षेप सुबाहूरसि। यावत्स विद्धः प्रापतद्भुवि तावदेव शेषानामिषाशिनो निजघान राघवो वायव्यास्त्रेण मुदमादधानो मुनीनाम्।

यज्ञघ्नान्निघ्नंश्च रघुनन्दनस्तत्र पूजितो महर्षिभिर्विबभ्राजे पुरा यथा जम्भभेदी विजये। समाप्तक्रतुर्विश्वामित्रः पश्यन्दिशो निरीतिका भृशं मुदममेयामयमानः काकुत्स्थ! महाबाहो! दृष्टदोर्वीर्योऽहं हृष्टोऽस्मि, कृतार्थश्च। कृतं गुरुवचस्त्वया। महायशः! सिद्धाश्रमश्चायमभूदन्वर्थस्त्वया यथाप्रतिश्रवमिति प्रशस्य तौ मुनिरुपाग मत्ताभ्यां सन्ध्याम्॥

—:*:—

---

1. क्रियाविशेषणम्।

# ॥ राघवाभ्यां सह मुनिभिश्च विश्वामित्रस्य सिद्धाश्रमान्मिथिलाम्प्रति प्रस्थानम् ॥

यामिनीशायमानास्यः श्रीरामः सह लक्ष्मणेन यामिनीं तां निनाय सिद्धाश्रमेऽभूतपूर्वं विन्दमानः कमप्यानन्दमात्मनः कृतकृत्यताञ्चिन्तयमानः । न हि गुर्वाज्ञापालनादृतेऽन्यदस्ति जगति मोदास्पदम् । नापि किमप्यभ्युदयैकनिदानमन्तरेणाशिषं गुरुजनानाम् । प्रभातप्रबोधशीलतया सर्वश्रेयोभाजनतामुपगमितावपूर्वश्रीविलासपरिभास्वरौ च राजकुमारौ यथासम्प्रदायं निर्वर्तितपौर्वाह्णिकक्रियौ जातवेदसमिव समुज्ज्वलन्तमुपसद्य सप्रश्रयमभिवादयमानौ च मुनिशतमन्युमुदीरयामासतुरुदारमेदुरां गिरमतितरां मधुराञ्च मुनिशार्दूल ! किङ्कराविमौ स्वः पुरस्तात्समुपस्थितौ भवतः । आज्ञापय यथेष्टं करवाव शासनमिति चक्रवर्तिकुमारतामपि[1]प्रस्मृत्यात्मनि, स्मरन्तावपि वा महतां कैङ्कर्याय परमसुकृतफलतया बहुमन्तव्याय सुतरां स्पृहयन्तौ ।

भगवान्हि स्वाभेदभक्तिसम्पत्समृद्धाय स्वान्यं न ददाति आहूय न ददाति स्वयं गत्वैव ददाति स्वात्मानञ्च तनोति यथेच्छाविनियोगार्हम् । विश्वामित्रेणात्र प्रतिवक्तव्ये श्रीरामभक्त्यतिरेकेण प्रणुन्नाः सर्वेऽपि महर्षयः समुन्मिषत्प्रहर्षोत्पिपादयिषाः स्वीकृत्यानुमतिं विश्वामित्रस्य रामाय विनिवेदयामासुः । नरश्रेष्ठ ! भगवत्कैङ्कर्यैकतानतया काम्यनित्यकर्मभ्यामपि प्रशस्ततरो मैथिलस्य भविष्यति महान्यज्ञो जनकस्य । तस्य च दर्शने समुत्सुका यास्यामो वयं यतः शुद्धसत्त्वानामस्मादृशां नेतर स्तद्दर्शनादलं प्रीतये । इयं हि भवति महती संस्कृतिर्नः । सङ्गच्छमानैरस्माभिश्च यज्ञे दानमानादिद्वारा भूयेत नियतं भूतिकामैर्महात्मनामपि सङ्गं कृतसुकृतसुलभं लप्स्यमानैः । येन जीवयात्राफलतयापूर्व [2]विद्यालाभोपि सेत्स्यति । [3]आर्या हि वयं गतिशीलाः संविच्छ्रियः कामुका न स्थितिशीला इवानार्याः । नरशार्दूल ! सहास्माभिस्त्वमप्यागच्छ । राजकुमार ! द्रक्ष्यसि च तत्र महदद्भुतं धनूरत्नं किमपि साकं कन्यारत्नेन विश्वामित्रकृपया । यत्तत्र वर्तते देवरातारव्यप्राचीनजनकस्य यज्ञे सदसि दैवतैर्दक्षयज्ञवधे प्रसादिताच्छिवाल्लब्धं, यज्ञप्रसादितैः शिवसहितैश्च दैवतैर्देवरातहस्ते धनुर्दत्तं तदप्रमेयबलमारोपणं कर्तुमनलञ्च सुरासुरगन्धर्वयक्षरक्षःप्रमुखैः कथञ्चन मानवैः । मोदिष्यसे च पश्यन्नद्भुतदर्शनञ्च यज्ञं श्रीमन्तं जीवन्मुक्तस्य सतो जनकस्य श्रेयश्च प्रदास्यतो नियतम् । यजनीयदेवताभूतमर्चितञ्च विविधैर्गन्धैर्माल्यैश्चागरुगन्धिभिर्धनुः प्रहर्षयति त्वां स्वमिव दुर्धर्षमिति । इत्थं वाचयित्वा महर्षिभिः स विश्वामित्रः सर्षिसङ्घः सकाकुत्स्थश्चामन्त्र्य वनदेवताः संस्तुताश्चिरमिति विप्रयोगसमहमानः प्रस्थानमकृत, "अयि स्वस्ति भवतीभ्योऽस्तु । सिद्धः सिद्धाश्रमादहं यास्यामि शिलोच्चयमध्युत्तरभागीरथीतीरं हिमवन्तमनुमन्यध्वमिति प्रणिगदन्सगद्गदम् । ततः

---

1. विस्मृत्य ।
1. उपनिषद्युष्मस्त्युपाख्यानाद्यत्र मानम् ।
2. ऋगताविति धातोरार्य शब्दनिष्पत्तिः ।

प्रदक्षिणीकृत्य प्रातिष्ठतर्षिश्रेष्ठः सिद्धाश्रमं, दिशमुद्दिश्योत्तराम् । मध्येमार्गञ्च परमात्मानमियेष योक्तुं सह सीतया यथास्वाभिलषितं लोककल्याणकलनाकामः "श्रेयश्चास्मै प्रदास्यामि बहुरूपं न संशय" इति सत्यापयंश्च स्व प्रतिश्रवं कृतार्थीचिकीर्षुः ऋषिरात्मानम् । निर्वर्त्य हि परार्थे कृत्यं तटस्थतायै स्पृहयन्ति महात्मानः । आरो पिताग्निहोत्रसम्भाराश्शतं ब्रह्मवादिनां शकटयः सिद्धाश्रमनिवासिनश्च मृगपक्षिगणा महामुनिमन्वयुः । निवर्त्य च प्रयत्नेन सुतनिर्विशेषं पोषितान् मृगांश्च पक्षिसङ्घान्विलङ्घ्य सुदूरमध्वानं ब्रध्ने च शोणरुचौ सायन्तने गिरिव्रजं निकषा शोणं नाम नदमुपगताः । पूर्वं वामनभावेनानुभूततया सिद्धाश्रमपरित्यागश्चेतसि रामस्य समतनुत तस्मिन्समये किमप्यस्वास्थ्यं, मायामानवस्यापि सतः । अस्तङ्गते चादित्ये स्नात्वा हुतहुताशनाः शोणतीरे पुरस्कृत्य विश्वामित्रं निषेदुस्तेऽमितौजसः । ससौमित्रिः श्रीरामोऽपि समभिपूज्य मुनीन्द्रान्निषसादाथाग्रे विश्वामित्रस्य । भगवन्समृद्धवनशोभितः कस्यायं देशः साफल्यं ददल्लोचनयोः श्रोतुमिच्छामि भद्रं ते तत्त्वतो वक्तुमर्हति भवानिति रामेण चोदितो महातपा निखिलमृषिमध्ये कथयाञ्चकार ॥

## विश्वामित्रेण शोणाकूलस्थदेशवृत्तान्तकथनप्रसङ्गेन स्ववंशवृत्तान्तकथनारम्भः ॥

स्ववंश्यानामयं देश इति रामायाभिधातुमुपात्तकौतूहलो मुनिशार्दूलः कौसल्येय ! सावधानं शृणु—पुरा कश्चित् ज्ञानैश्वर्यादिभिर्महानितरब्रह्मपुत्रविलक्षणो ब्रह्मणो मानसः पुत्र आसीन्निर्बाधमाचरितव्रतो धर्मज्ञश्च । यो नारदादिवदनवस्थाय सत्यलोके प्रजापालनलालसः कौभूमौ शेत इति कुश इत्यन्वर्थनाम्ना व्यपादिश्यत विशुद्धक्षत्रियधर्माणां शरीरीव कोऽपि राशिः । सोऽयमुदपीपददनुरूपायां प्रशस्तांश्चतुरः पुत्रान्वैदर्भ्यां, कुशाम्बं कुशनाभम[1]सूर्तरजसं वसुमिति । आज्ञापयामास चात्मजान्सत्यधर्मपरायणान्पुत्राः ! क्रियतां प्रजापालनं प्राप्स्यथ धर्मं पुष्कलमिति । वचनमृषेः श्रुत्वा कुशस्य चत्वारोऽपि कुमारा लोकमान्या यथायथं समचीकॢपन्सन्निवेशं सर्वे पुराणाम् । कुशाम्बश्चक्रे पुरीं कौशाम्बीं कुशनाभो महोदयं महातेजा असूर्तरजसो महीपतिर्धर्मारण्यं राजा वसुश्च पुरं गिरिव्रजम् । राम ! शोणकूले सैषा वसुमती च भवति वसोर्महात्मनः । समन्ततश्चैतस्या प्रकाशन्ते पश्य प्रकृतिरामणीयकैकशेवधयः पञ्च शैलोच्चया लोचनसाफल्यं ददतो गम्भीराश्च परिभास्वराः । एषां मध्ये मालेव शोभमाना स्यन्दते सुन्दरस्पन्दं मगधदेशादागततया व्यपदिश्यमाना सुमागधीति तरङ्गिणीयं शोणापर पर्याया पूर्वदेशात्प्रत्यङ्मुखवाहिनी सुक्षेत्रोभयपार्श्वतश्च नित्यसिद्धसस्यसमृद्धिर्वनराजिभिश्च मनोज्ञैर्भ्राजमाना । राजर्षिरजीजनत्कुशनाभः कन्याशतञ्च घृताच्याम् । ताश्च मदालसकलहंसगमना अभिनवयौवनमनोज्ञा निरुपम रूपामन्दसौन्दर्यानाविललावण्यैकमन्दिरायमाणतया नूनमिन्दिरायमाणाः स्फुरणिन्यश्चानणुभिर्मणिभूषणैः शतह्रदा

---

1. न विद्यते सूर्तं प्रसूतं रजो यस्यतमजिति योगविभागादच् ।

इव प्रावृषि मेघमण्डलं तारापथमिव च तारा स्फुरत्तरा उद्यानमध्यास्य परस्परमालपन्त्यः क्रीडन्त्यो नृत्यन्त्यश्च गायन्त्यः प्रदिद्युतिरे प्रमोदमानमानसाः प्रमदाः। ताश्च दृष्ट्वा सर्वात्मको जगत्प्राणः पराहतश्च शरैः प्रसूनशरस्य प्रणिजगाद सुन्दर्यः! कामये वः सर्वाः सम्प्रति सम्प्रतिपन्नरूपधेयमधुरसन्दर्शनाः। भविष्यथ मम भार्या भावो ऽयं त्यज्यतां मानुष आयुरवाप्स्यथ दीर्घतरं चलं हि यौवनं प्रतिक्षणं विशेषतश्च मर्त्येषु अनुच्छिद्यमानमुपगम्य यौवनममर्यो दीप्यध्वमिति। ताश्चैकमत्येन प्रत्यूचुरनीचप्रकृतयस्त्वमन्तश्चरसि सुरोत्तम! भूतानां विदितभव त्प्रभावा एव वयं स्मः किमित्यस्माननीत्यवमन्यसे ज्ञात्वापि धर्मम्। विद्धि सर्वास्त्वं नः कुशनाभसुता इति। दुर्मेधश्च्यावयितुं त्वां स्थानाद्देवमपि वयमीश्महे परन्तु क्षमामहेऽपराधं प्राथमिकम्। स च नः पिता मा ते मृत्युर्भूत्। पितास्मान्स्वयं यस्मै दास्यति तमेव प्रतीक्षामहे स हि नः प्रभुर्दैवतञ्च परममिति। श्रुत्वासां गिरं परम कोपनः प्रकम्पनः प्रभुर्भगवान्प्रविश्य बभञ्ज सर्वाण्यपि गात्राणि मधुरमधुराणि कृशोदरीणां तत्क्षणम्। सपदि विषण्णेन कुब्जीभूतेन कन्याशतेन विनिवेदितवृत्तान्तः कुशनाभः पुत्र्यः! कामं रोचये भवतीनामैकमत्येन कुल गौरवसंरक्षणपरायणानामनितरसाधारणीमिमां क्षमां विशिष्य प्रदर्शिताञ्च त्रिदशेषु। दानं सत्यं यज्ञो यशः सर्वमेतत्क्षमैव। अस्याञ्च परमधर्मे क्षमायां प्रतिष्ठितं भवति समस्तञ्जगदिति प्रशंसन्विसृज्य च दुहितॄर्मन्त्रयामास यथादेशकालं प्रदातुं ता मन्त्रिभिर्मन्त्रविदां कोविदः। काले त्वेतस्मिंश्चूली नाम कश्चिदूर्ध्वरेताः शुभाचार स्तपश्चरन्नासीन्महामुनिः। तमृषिं वरिवस्यैकरसिका पर्युपास्त गन्धर्वी काचिदूर्मिलातनया नाम्ना सोमदा। शुश्रूषणपरितुष्टेन प्रेरिता सा वरमवरीष्ट ब्राह्मया परिवृतः श्रिया ब्रह्मभूतस्त्वमसि महातपा भो भगवंस्त्वत्तुल्य मिच्छामि धार्मिक! पुत्रमिति। प्रसन्नश्च महर्षिर्विधवायै वितताार सुतं मनःसङ्कल्पमात्रजातं "धार्मिकं पुत्रमि च्छामी"ति धृत्या धर्मेण च प्रार्थनयैव तदसङ्गममभिव्यञ्जयन्त्यायपांसुलायै महिलायै यमामनन्ति ब्रह्मदत्त इति चूलिनः कुमारं मानसम्। स च सौमदेयः पुरीमध्यवात्सीत्तदा ब्रह्मदत्तः काम्पिल्याख्यां परया श्रिया देवराज इव दिवम्। कुशनाभश्च परमधार्मिकः ससत्कारमानीय ब्रह्मदत्तं सुप्रीतेनान्तरात्मना काकुत्स्थ! तस्मै प्रददे शतञ्चात्मनः कन्यारत्नानि। यावत्पाणीञ्जग्राह तासां स महात्मा तावदेव तत्करकमलस्पर्शप्रभावेन न केवलमज निषत ता विकुब्जा विगतज्वराः किन्त्वभूतपूर्वाञ्च व्युसुरधिश्रित्य श्रियम्। महीपतिः सादरं सदारं च सत्कृत्य ब्रह्मदत्तं सोपाध्यायगणं तदा प्रेषयामास। सोमदा च गन्धर्वी सदृशीं क्रियामभिनन्द्य पुत्रस्य, स्पर्शं स्पर्शं च स्नुषाः परमानन्दसिन्धावमाङ्क्षीदतिसुभगाः प्रेम्णा च भूयसा।

कृतोद्वाहे गतवति च ब्रह्मदत्ते स्वयमपुत्रः पुत्रलाभाय पुत्रीयामकर्षीदिष्टिं कुशनाभः। परमोदारः कुशस्तदा ब्रह्मसुतस्तमवादीत्पुत्र! सदृशस्तव समुत्पत्स्यते सुतः परमधार्मिको नाम्ना विश्रुतो गाधिरिति। तेन च लोके प्राप्स्यसि कीर्तिं शाश्वतीमित्यनुगृह्य जगामाविश्याकाशं सनातनं ब्रह्मलोकं कुशो यदर्थमवातरत्। ब्रह्मलोक मध्यमलोकयोर्यथेच्छाचारस्य लब्ध्वा परममनुग्रहं पितुर्ब्रह्मवित्तमस्य कुशनाभः प्रजहर्ष कृतकृत्यताङ्गतः। काले च गते कतिपये धीमतः कुशनाभस्य घृताच्यां जज्ञे नामतो गाधिरिति धार्मिकाणामनुत्तमः। काकुत्स्थ! स पिता मम भवति गाधिरित्थं कुशवंशे प्रसूतत्वादस्मि कौशिकः। मम पूर्वजा कापि भगिन्यास्ते सुव्रता नाम्ना सत्यवती या सावृचीकाख्यमुनये प्रदत्ता। भर्त्रनुवर्तनधर्मप्रभावात्सा कापि प्रभावती सती सहैव शरीरेण स्वर्गञ्च

गाम । किन्तु दुष्करं पतिदेवतानाम् । लोकस्यामुष्मिकहितकृते सुखाय चैहिकाय परमोदारा कौशिकीति नाम्ना दिव्या पुण्योदका च भूत्वा कापि मनोज्ञा महानदी त्रिविष्टपादुपाश्रिता हिमवन्तं मे भगिनी । ततो महाभागायां सरिद्वरायां भगिन्यां स्नेहयुक्तः कौशिक्यां हिमवत्पार्श्वे एव नित्यनिरतः सुखं वसन्नहं [1]यज्ञनियम हेतोः समुपागतः सिद्धाश्रमं राजकुमार ! तेजसा तव सिद्धोऽस्मि संवृत्तः, पृच्छामनुरुध्य तेऽच्छमतेर्देशस्यास्य गिरिव्रजस्य सह वृत्तान्तेन वंशस्य विशेष उत्पत्तिश्च ममाकीर्तिषातां मया प्रह्रष्यता । काकुत्स्थ ! कौतुकात्कथयतः कथा मेऽर्धस्त्वपनीतो यामवत्याः ।

यावति रात्रिभागे निद्रा निषिद्धा तावान्गतः । रामभद्र ! व्रज निद्रां मा भूदध्वनि श्वोगन्तव्येऽनिद्राहेतोः कोऽपि श्रमः । पश्य पादपा अपि गतां निष्पन्दतां निलीनाश्च कुलायादिषु शकुनयः स्वस्वावासञ्च मृगाः सर्वे समासन्नाः । दिशश्च तमसा व्याप्ता नैशेन । व्ययुङ्क्त च सन्ध्या भगवती । अश्विन्यादिताराभिः केवलनक्षत्रैश्च ज्योतिष्मद्भिरिव नैत्रैः चित्रीयमाणमुद्योतते नभःस्थलमलं राम ! लक्ष्म्योल्लसितं, परिपश्य सकलजनमनोह्लादकश्चायं कुमुदबान्धवो मन्दमुदञ्चति चन्द्रिकासारैस्तमो निरस्यन्निशीथिन्याः । उलूकादयश्च ततस्ततः प्रचरन्ति सत्वैर्नैशैः सह शब्दायमानैः । पिशिताशनाश्च यक्षरक्षःपिशाचादयो रौद्राः प्रारभन्तेऽत्र पर्यटितुमित्युक्त्वा विरमति च मतिमति महामुनौ साधु साध्विति काममुद्घोषयन्तः परस्परमृषयः प्रशशंसुरहो ! सदा धर्मपरोऽयं महान्वंशः कुशिकानां ब्रह्मोपमा हि नरोत्तमाः समे कुरुवंश्याः । विशेषतश्च महायशा विश्वामित्रः कुलोद्योतकरी च सरिच्छ्रेष्ठा कौशिकी भगवतीति । कुशिकात्मजश्च निद्रामुपागमच्छ्रीमानस्तङ्गत इव भगवानादित्यः सौमित्रिणा च राघवः श्लाघमानो मुनिशतमखमखर्वपराक्रमः ॥

# विश्वामित्रेण रामं प्रतिप्रासङ्गिकोमावृत्तान्तेन सह सङ्ग्रहेण गङ्गावृत्तान्तकथनम् ॥

शोणतीरे रात्रिशेषं सुखं शयित्वा प्रबोधितश्च [2]मनोहरव्याहारमविघ्नब्राह्ममुहूर्तं विश्वामित्रेण निर्वर्तितपौर्वाह्णिकक्रियश्च गमनं रोचयमानो रामचन्द्रः पप्रच्छ पुलिनमण्डितः शोणोऽयं शुभजलो लसतिस्तोकसलिल आतो नावश्यिका नौर्भगवन्नैकपद्याव्यतिकरेण न ज्ञायते कतरेण पथा सन्तरिष्याम इति । दाशरथे ! पन्था एष मयोद्दिष्टो येन महर्षय इमे गच्छन्तीति प्रत्युत्तरयंस्ताभ्यां काननकामनीयकसन्दर्शनानन्दतुन्दिलाभ्यामिला धीश्वरनन्दनाभ्यामभिनन्दयंश्च तौ गाधिनन्दनो भगवान्सुन्दरतरां सरित्प्रवरां ददर्श जाह्नवीमध्यर्धदिवसमध्वानं

1. गयापिण्डदानवत्सिद्धाश्रमैकसाध्ययागजन्यसिद्धिहेतोः ॥ 2. प्रबोधनक्रियाविशेषणम् ।

गत्वा च सुदूरम् । पश्यन्तश्च तपस्विनः सह राघवाभ्यामघप्रध्वंसैकपटीयसीं तटिनीसुराज्ञीमच्छस्फटिकसङ्काशवारिपूरमेदुरामुत्तुङ्गतरङ्गभङ्गसुभगां हंससारससेवितामस्तोकरामणीयकामुपयन्तः प्रमोदं रोघस्येवामृतान्धसां धुन्याश्च क्रुरावासपरिग्रहम् । स्नात्वा ततः सन्तर्प्य यथाशास्त्रं पितृदेवता हुत्वा चाग्निहोत्रममृतवद्धविर्जलञ्च गाङ्गं प्राश्य शुचौ तीरे परिवार्य परितो विश्वामित्रमुपविविशुर्विकसन्मानसाः समे मुनयः सत्यलोकायितुकामा इव तं देशं समुन्मिषत्कथाश्रवणाभिलाषाः ॥

अथ स्वपादपाथोजजन्मसु भगाया वैभवं गङ्गाया अवगमयितुमिव लोकं लोकाभिरामो रामस्तपस्विभ्यः प्रति पप्रच्छ सामर्थ्यमृच्छन्किमपि स्वयमनुयोगविधौ । भगवञ्श्रोतुमिच्छामि कथङ्कारमाक्रम्य सैषा त्रैलोक्यं [1]समगंस्त सरित्पतिं भगवती त्रिपथगेति । चोदितः प्रोवाच चरित्रमतिमात्रपवित्रं विश्वामित्रः सङ्क्षेपतस्त्रिपथगायाः । राघवेन्द्र ! शैलेन्द्रो ह्यस्ति धातूनामयस्ताम्रादीनामाकरो महान्नाम्ना हिमवान् । तस्य च कन्याद्वयमप्रतिमरूपं यस्य च माता मेरुदुहिता नाम्नान्वर्थेन चकास्ति मनोरमा । सैषा जयिन्यास्ते प्रद्युम्नभार्याया हिमवतो भार्या समभ्यर्ह्या । तस्यां च हिमवतः सुतेयमजनि जनिनिहन्त्री मज्जनमात्रेण ज्येष्ठा श्रेष्ठगुणोपेता जाह्नवी । उमा नाम काप्यनुपमा द्वितीयाद्वितीयगरिमसमभ्युन्नता । [2]देवकृत्यानि निर्वर्तयितुमनसः सुमनसः संहत्य शैलेन्द्रं द्रवयामासुरिमां गङ्गाम् । धर्मेण विश्राणयामास हिमवांस्तनयां लोकपावनीं स्वच्छन्दपथगां गङ्गां [3]त्रैलोक्यैकहितं चिकीर्षुः । योमा वामभ्रुवां सम्राज्ञी द्वितीया व्रतमुग्रमास्थाय तपस्तेपे ताञ्च लोकनमस्कृतां पशुपतयेऽप्रतिरूपाय । जगदेकपूज्यताङ्गते उभे अपीमे निरुपमे स्वकन्ये प्रतिपाद्य पुण्यभाजनयोर्जगद्धिताभिलाषेण तीव्रेण राराज्यतेऽयं पर्वतराजः प्रातःस्मर्तव्यो भाग्यवतामनुत्तम इति ॥

## ॥ कुमारसम्भवः ॥

अथ कथामभिनन्द्य मुनिकथितामूचतुरुच्चकुतुकौ राघवलक्ष्मणौ मुनिसुत्रामञ्ज्येष्ठाया दुहितुः पर्वतराजस्य वेत्सि दिव्यं मानुषञ्च वृत्तं, विस्तरज्ञोऽसि यतः । व्याहर त्रीन्पथो भूर्भुवस्स्वराख्यान्प्लुता सैषा केन हेतुना कर्मभिश्च कीदृशैः सरित्सम्राज्ञीति प्राप्ता प्रथां त्रिपथगाधर्मफलञ्च सेत्स्यति पुण्यात्मनोऽस्याश्चरित्रश्रवणेन नः सुमहदिति । ऋषीणां मध्यं सभाजयितॄणामध्यासीनः प्रणुन्नश्चेत्थमवनिपतिसुताभ्यामभिधातुमुपचक्रमे भगवान् कौशिकः ॥ राम ! पुरा पुरारातिर्महातपाः स्पृहयन्कृतोद्वाहः पार्वत्यै समुद्रूढोत्कण्ठः शितिकण्ठो रन्तुमुपचक्रमे । दिव्यञ्च गतं वर्षशतं, सुरतन्तु नान्तञ्जगाम । मान्मथे चैवं तयोर्युद्धे नैवासीत्पराजयः । नापि कोऽपि परन्तप !

---

1. वागम इति, अनुनासिकलोपविकल्पः ।
2. कृत्यानि प्रयोजनानि स्नानपानसेनापतिजननादीनि ।
3. तारक भीतत्रैलोक्यरक्षकपुत्रोत्पत्तिरूपं हितम् ॥

तस्यां सुतो देव्याम् । ततश्च पितामहपुरोगमा अस्यां य उत्पत्स्यते पुत्रस्तं कः प्रतिसहिष्यत इत्युद्विग्नाः काममभिगम्य प्रणिपतन्तः सञ्जगरिरे गीर्वाणाः । देवदेव ! लोकहिते रतस्त्वं नः प्रणिपातेन सुराणां कर्तुमर्हसि प्रसादम् । त्वत्तेजः समुद्भूतं पुत्रं न लोका धारयिष्यन्ति । वेदावगते योगपथे योक्तुमात्मानं देव्या साकं तपश्चर । तेजोमयं निजं रेतस्तेजः शरीर एव धर्तुकामो भव नास्यां मोक्तुमर्हसीति । सर्वलोकमहेश्वरश्च सहोमयाहं तेजस्तेजस्येव धारयिष्यामि त्रिदशा ! यन्तु निर्वृतिं लोकाः क्षुभितं यद्येतदनुत्तमं स्वात्तेजोरेतःस्थान हृदयसम्पुटात्तर्हि कथयत को भरिष्यतीत्यप्राक्षीद्विरूपाक्षः ॥

समभाषिषत दिविषदो वृषभध्वजं क्षुभितं तेजो धरा धारायिष्यतीति । सुरपतिरेवमुक्तः प्रमुमोच महीतले येन व्याप्ता च तेजसा समिन्धे स वसुन्धरा सगिरिकानना । तदनु मा भङ्गः पृथिव्या मूढ्गवत्या इति विस्मयतां प्रेरणया गीर्वाणानां सह मातरिश्वना तदैश्वरं स्म व्याप्नोति तेजो वैश्वानरो यावत्तावदेव तत्समजायत श्वेतपर्वतः । ततः कालपरीपाकवशात्पावकादित्यसमद्युति श्रीमद्दिव्यं च शरवणम् । यत्र जातो महातेजाः कार्तिकेयो भगवानग्नि सम्भवः । अथो उमां परमेश्वरञ्च प्रीतात्मानः सर्षिगणाः पूजयामासुर्निर्जराः । पार्वत्यथ सुपर्वणःशशाप गृहीत्वा सलिलमुदग्रप्रभा क्रोधसंरक्तनेत्रा भो देवा ! यतो न्यषेधि भर्तृसङ्गमो मे पुत्रमभीप्सन्त्या भवद्भिरतो न भवितव्य मुत्पादकैरपत्यानां स्वेषु दारेषु । युष्माकमद्यभृति पत्न्यः सन्त्वप्रजा इति । एवमप्यशान्तात्मा पृथिवी[1]मपि, दुर्मेधे मम पुत्रमनिच्छन्ती धरे ! त्वमपि पुत्रकृतां नैवावाप्स्यसि प्रीतिम् । [2]नैकरूपा भविष्यसि बहुभार्या चेति । व्रीडितान्दृष्ट्वा मृडोऽपि हिमवतः प्रतीचीं प्रति गन्तुमुपचक्रमे । गत्वा च स हिमवतो गिरेरुत्तरपार्श्वभूते शृङ्गे महेश्वरः सह देव्या समचीकृपत्सदा तपोव्रतम् । राम ! शैलपुत्र्या एष निवेदितो विस्तरः । सलक्ष्मणःशृणु प्रभावं प्रकृतायास्त्रिपथगाया अपि । देवे च तपस्तप्यमाने सुराः सहर्षिगणैः पितामहमुपागमन्नभीप्सन्तः सेनापतिम् । प्रणिपत्य प्रार्थयाम्बभूवुर्ब्रह्मन्यः पुरा भवता नः सेनापतिः प्रत्यज्ञायि प्रदेयतया स हि न जातोऽद्यापि भगवन्नसद्वैरिनिबर्हणः । तत्पिता हि हिमवच्छिखरे तपःपरम मास्थाय सहोमया वर्तते तप्यमानः । विधे ! विधानज्ञ ! संविधत्स्व समनन्तरकार्यं त्वं हि नः परमा गतिरिति । असमान्वत सर्वलोकपितामहो मधुरैर्वाक्यैः शैलपुत्र्या युदुक्तं तन्न वैतथ्यमश्नुवीत नियतम् । प्रकाशते हीयमाकाशगङ्गा हुताशनोऽस्यां जनयति पुत्रं यो राजिष्यते सेनापतिर्दिविषदामरिन्दमः । सम्मन्वीत चैतज्ज्येष्ठा शैलेन्द्रदुहिता । बहुमतश्चायं भविष्यत्युमाया अपि विषय इति ॥

देवाः सर्वेऽप्यग्निं रुद्रतेजःस्थं पुत्रार्थं नियोजयितुकामा जग्मुः कैलासं परिमण्डितञ्च धातुभिर्नैकविधैः । तदनु तनूनपातमतनुप्रभापरिभास्वरमू[3]दुरदूरात्कार्यसिषाधयिषयानिमिषाः । देव ! हुताशन ! संविधत्स्व सुरकार्य मुत्सृज त्वमैश्वरं महातेजस्तेजः शैलात्मजायां गङ्गायामभङ्गुरतरङ्गहृदयङ्गमायामिति । तथेति कृतप्रतिश्रवः पावको ऽभ्येत्य गङ्गां देवतानां प्रीतिकृते देवि ! धारय गर्भमेनमनाविलमनणुस्फुरणमित्यभ्यर्थयामास । तथेति दिव्यरूप

---

1. शशापेत्यनुषङ्गः।
2. ऊषरत्वादिना
3. वचिस्वपीति सम्प्रसारणम्।

धरायाः सौन्दर्यातिशयं परिपश्यंस्तस्याः परवशो वैश्वानरो यथासर्वावयव्याप्ति सद्यः समवाकिरत्तेजः । येन समभ्यषिच्यन्त स्रोतांसि निरन्तरं सर्वाणि स्रोतस्विन्याः । तदनु प्रणिपत्य प्रणिजगाद गङ्गा च सर्वदेवपुरोहितं वीतिहोत्र ! नाहं भर्तुमस्मि शक्ता समुद्धतं ते देवतेजः सम्प्रव्यथितचेतना दह्यमानाग्निना तेनेति । अथादिदेश हुताशनो यद्येवं देवि पादेऽस्मिन्हैमवते सन्निवेश्यतामयं गर्भ इति । गङ्गापि परमभास्वरमाकृष्य स्रोतोभ्यः समुत्ससर्ज महत्तत्तेजःसद्यःकामयमाना परां निर्वृतिम् । निर्गतमस्या गङ्गाया यद्धरणीगतं शोणितादि तदवाकल्पत तप्तजाम्बूनदप्रभं शुभमतिविशुद्धं [1]हिरण्यं रजतञ्च राजत्तरम् । तत्र योऽसौ क्षारांशः तस्मात्ताम्रं कार्ष्णायसञ्चाभ्यजायत । मलञ्चादसीयमुर्व्यां पर्यणंसीत्त्रपुसीसकाद्यात्मना । गर्भे च गङ्गया निक्षिप्तमात्रे तस्य तेजोभिरञ्जितं श्वेतपर्वतसहितं समस्तं तच्छरवणं समुदज्वलत्सौवर्णम् । प्राप्य प्रजापतिरपि सपदि पश्यंस्तं प्रदेशं हुताशनसमप्रभस्य सुवर्णस्य यज्जातं रूपमेतन्मधुरमुज्ज्वलञ्च तज्जातरूपमिति ख्यातिमेत्वित्यूचे । राघव! तदाप्रभृति व्यपदिश्यते सुवर्णमिदञ्जातरूपमिति । तदानीं कुमारं तत्र जातं जातरूपमपि निजतेजसाभिभवन्तम भूतपूर्वप्रभावमवाङ्मनसगोचरसौन्दर्यसौकुमार्याभ्याञ्चेतोहरमसारीकृताश्विरूपधेयमुदीक्ष्य कौतुकोदञ्चद्दक्षमुखाः प्रभृतयः क्षीरसम्भावनार्थाय निर्जराः कृत्तिकाः समयूयुजन् । "अयमस्माकं सर्वासां पुत्रो भवतादि"ति कृत्तिकास्ता विधाय देवैः कमपि सङ्केतं ददुः प्रीत्या जातमात्राय क्षीरंकुमारायेति कार्तिकेय इति नाम विदधिरे विबुधाः पुत्रस्त्रैलोक्यविख्यातो विजेष्यत इत्यन्योन्यमुद्घोषयन्तः प्रीणयितुकामा मातॄः कृत्तिका भगवतीः । कृत्तिकाश्च निशम्य गिरं सुराणां मुदममेयामुपेयुष्यः सपदि स्नपयाम्बभूवुस्तमर्भकं गर्भस्रवनिवृत्त्यर्थमादीप्यमानं पावकमिव परमया परिष्कृतं लक्ष्म्या । तदानीं स्कन्नत्वात्स्कन्द[2] इत्यन्वर्थञ्चकृत्रिदिवेशा नामधेयम् । ततः कृत्तिकानां प्रादुर्भूतं स्तन्यं प्रत्यग्रतया षण्णामपि षडाननो भवन्नपिबत्क्षीरमनुत्तमिति षडानननामापि व्यभात् । एकेनैवाह्ना गृहीत्वा क्षीरमक्षीणज्ञानविग्रहः क्रमेण च वर्धमानः समपद्यत सुकुमारवपुरधरीकृतश्रीकुमारः भगवाञ्शर्वकुमारः कुमार इत्याख्यामात्मसात्कुर्वन्सर्वथा । ततस्तमप्रतिमप्रभावं भगवन्तं सनत्कुमाररूपेण नारदायाप्युपदेक्ष्यन्तं ज्ञानसमुच्चयमिव चकासतमुरीकृतशरीरं निगमशिखरमहारण्यैकविहरणधुरीणं कमपि दिव्यं केसरिणं स्फुरन्तमिव पुरस्तात्परमेश्वरसारं श्रीराम! भवदभिन्नतया प्रणवार्थं परं भवदौपम्यैकसहं दुःसहपराक्रमममृतान्धसः समेत्यो षर्बुधपुरोगमा हर्षादभ्यषिञ्चन्सुरसेनागणनायकत्वेन । स च सत्यपराक्रमः समस्तानपि विभुरजयद्दनुजांस्तां स्तारकप्रभृतीननिवार्यवीर्यः । विस्तरोऽयमभिहितो मयोदन्तः श्रीराम! गङ्गायास्तथा कुमारसम्भवो धन्यः पुण्यश्च । काकुत्स्थ! भवतीव कार्तिकेये भगवति यो भवति भक्तः स भवन्नायुष्मान्भूतश्च पुत्रपौत्राद्यैरन्ते च व्रजति श्रीस्कन्द[3]सालोक्यताम् ॥

---

1. अयम्भावः—तैक्ष्ण्यमलगन्धयुक्तेनशुद्धेन स्पर्शतो विद्धं स्वर्णम् । गन्धयुक्तेन विद्धं रजतम् । तैक्ष्ण्ययुक्तेन विद्धं ताम्रं लोहञ्च । मलयुक्तेनविद्धं त्रपुसीसे इति नानाधातुरूपम् ।
2. स्कन्नः परिस्रुत इत्यर्थे स्कन्द इति पृषोदरादित्वात्साधु ।
3. सलोक एव सालोक्यं स्वार्थे ष्यञ् ॥

# ॥ गङ्गावतरणम् ॥

एवमभिधाय सविस्तरं दिव्यं सम्भवं गङ्गाया मानुषलोके तमुपचक्रमे श्रीरामाय वक्तुं भगवान्विश्वामित्रः। अयोध्याधिपतिर्धर्मात्मा शूरश्च पूर्वमासीन्नराधिपः, सगरो नाम। यो बभूव चिरमपुत्रः। तस्य चाभूतामुभे भार्ये। तयोर्ज्येष्ठा च सत्यवादिनी नाम्ना केशिनी वैदर्भदुहिता। द्वितीया च सुमतिसंज्ञिताप्रतिमरूपारिष्टनेमि[1] पुत्री। परन्तपः स तपस्तप्तवान्सहपत्नीभ्यां हिमवन्तमासाद्य भृगुप्रस्रवणे सगरः। पूर्णे च शते वर्षाणां तपसाराधितो भृगुर्भगवान्सत्यवतां वरः प्रादाद्वरं सगराय प्रसन्नः। राजन्ननघ! सुमहांस्ते भविष्यत्यपत्यलाभः प्राप्स्यसि च कीर्तिमनुत्तमाम्। अनयोर्जनयिष्यत्येका तव पुत्रं वंशकरमपरा च षष्टिं पुत्रसहस्राणीति। क्षत्रियराजवैदर्भद्विजराजकश्यपयोः पुत्र्यौ च प्रसाद्य भृगुमृषिमूचतुः कृताञ्जलिपुटे ब्रह्मन्नेकः कस्याः पुत्रः का वा बहूञ्जनयिष्यतीति। परमर्षिश्च स्वच्छन्दोऽत्र विधीयतामेको वा बहवो वा, का वा कं वा वरमिच्छतीत्यवोचत।

वैदर्भदुहिता वंशकरमेकमवृत सुतं साक्षिणः पत्युः सन्निधौ। तदा सुपर्णभगिनी सुमति स्तु षष्टिं पुत्रसहस्राणि। कालेऽथ गते प्रासूत केशिनी सुतं यस्य ख्यातमसमञ्ज इति नाम। सुमतिश्च गर्भतुम्बभेदात्षष्टिं पुत्रसहस्राणाम्। धात्रीभिर्घृतकुम्भेषु संवर्धिताः सर्वेऽपि सौमतेयाः प्रत्यपद्यन्त रूपसम्पदा समं यौवनं कालेन। केशिन्यामुत्पन्नश्च सगरात्मजोऽसावसमञ्जो नैवाश्नुत सामञ्जस्यं निसर्गजानार्जवः। यतो यथादुर्वासनञ्चोरयित्वा बालकान्सारवे च सारवे प्रक्षिप्य सलिले मज्जतो दृष्ट्वा कौतुकोद्रेकेण विस्फारितनेत्रः स्वैरं ननर्त। एवं पापाचारः सज्जनप्रतिबाधकः पौरानभिद्रुह्यंश्च स निर्दयं सन्नपि ज्येष्ठः पुरान्निर्वासितः पितृभ्यां धर्मविद्भ्याम्। तस्यैतस्यासमञ्जस्य सूनुरासीदंशुमान्नाम सम्मतः सर्वलोकस्य सदा प्रियंवदश्च। ततः कालेन महता यियक्षन्महीक्षित्सगरः सोपाध्यायगणः समाम्नायज्ञः समुपचक्रमे यथानिश्चिति क्रतुमाचरितुम्। काकुत्स्थश्च स्ववंशकूटस्थं यज्ञाहरणवार्ताञ्च विस्तरेण बुभुत्समानमवगम्य गाधिनन्दनस्तदानीमवादीद्विवक्षितमेवायमपि पृच्छत्यैक्ष्वाक इति कृतप्रहासः। यौ स्तः शङ्करश्वशुरस्तुषाराद्रिरवन्ध्यप्रकृतिविलासश्च विन्ध्यः परस्परमौत्सुक्यान्निरीक्षमाणाविवोभौ। तयोर्मध्ये पुण्यभूमिरिति प्रसिद्ध आर्यावर्ते प्रावर्तत महान्क्रतुःसगरस्य सर्वसम्भारसम्भृतः। तत्र च पितुरनुसृत्या देशमंशुमान्दृढधन्वा महारथस्समतनुतातनुपराक्रमः श्रीमानश्वानुचरणम्। उक्थ्याहे च यज्ञियमपजहार हयं हरिहयो यजमानस्य तनूमास्थाय मायामयीम्। अथोपाध्यायगणाः सर्वे सगरमूदुरुदग्रभीतयः पार्थिवम्। पर्वण्यस्मिन्वेगेन तुरगापहरणं भवति नियतमशिवायैव नः सयजमानानां यतोऽयं महान्यज्ञापराधस्तदन्विष्य जहि वाजिनो हर्तारमच्छिद्रश्च निर्वर्तय क्रतुमिति। अनुपदमादिदेश सदसि विशाम्पतिः षष्टिं पुत्रसहस्राणि पुत्रकाः! पुरुषर्षभा न खल्वहंगतिं पश्यामि रक्षसामश्वस्य हर्तॄणां मा मन्त्रपूतैर्महाभागैर्भूदनुष्ठीयमानोऽयं यज्ञः केवलं विफलः परन्त्वनर्थकरोऽपि नः। तद्गच्छत विचिनुध्वं पुत्रका भद्रमस्तु वः सर्वस्यामपि पृथ्व्यां समुद्रमालिन्यामन्विष्यतैकैकमप्यविहाय योजनम्। यावत्तुरगदर्शनञ्च खनत मेदिनीं गवेषयन्तस्तुरङ्गमापहारिणं ममाज्ञया। दीक्षितः[2]

---

1. अरिष्टनेमिःकश्यपः। 2. दीक्षितत्वेन प्रवासनिषेधात्॥

सहितः पौत्रैः सोपाध्यायश्चाहं स्थास्यामीहैव यावदश्वदर्शनं यात भद्रं व इति। पितुर्वचनयन्त्रिता महाबला ग्रामं ग्राममपश्यन्तस्तुरगं सगरात्मजा धरणीतलमेकैकोऽथ योजनायामविस्तारं बिभिदुर्वज्रखरस्पर्शैर्नखैः शूलैरशनिकल्पैः सुदारुणैश्च हलैः। येन च रघुनन्दन! ननाद भिद्यमाना मेदिनी कृत्स्नापि। सर्पाणां पातालवासिनाञ्चार्द्यमाना नामसुरराक्षसानामजनि महान्निनदः। रसातलं पातालं यथा भवति बिभिदुस्तथा ते पृथिवीं योजनानां सहस्राणि। एवं पर्वतसम्बाधं नृपात्मजाः खनन्तो जम्बूद्वीपं परिचक्रमुः सर्वतः। ततो देवाः सगन्धर्वाः सासुराः सपन्नगाश्चाभिगम्य पितामहमूचिरे प्रसाद्य भगवन्नेकोऽस्माकमश्वहर इति सर्वभूतेभ्यः सगरात्मजा द्रुह्यन्ति खनन्तः पृथ्वीं निघ्नन्तश्च रसातलवासिनो महात्मनश्चेति। पितामहश्च कृतान्तकल्पेभ्यः सन्त्रस्तान्सगरपुत्रेभ्यः प्रत्युवाच समस्तानादित्यान्। कृत्स्नेयं वसुधा वासुदेवस्य स्वं भगवतः सैषा महिष्यपि माधवस्य। स एष भगवान्प्रभुः कापिलमास्थाय रूपं योगबलेन धारयति सततमिमां धराम्। स धक्ष्यति कोपाग्निना नृपात्मजान्निर्भेदोऽप्ययं प्रति कल्पमवश्यंभावी च वसुमत्याः। दीर्घदर्शिभिर्दृष्ट एव भवति सगरकुमारविनाश इति। येन देवा हृष्टाः प्रति जग्मुर्यथागतम्। भिद्यमानायाञ्च पृथिव्यां प्रादुरासीत्स्वनो निर्घातस्वनसमानः। भित्वा महीं कृत्वा च प्रदक्षिणं पुत्राः सर्वेऽप्युपसद्य पितरमब्रुवत पितः! परिक्रान्ता कृत्स्ना पृथिवी सत्ववन्तश्च विनाशिता देवदानवरक्षोभिः पिशाचोरगकिन्नरा बहवः। नोपालभामहि विचिन्वाना अपि परिश्रमैरश्वहर्तारं हतकमिति। सगरः समगिरत समन्युः सपदि तदात्मजान्। भूयः खनत निर्भिद्य वसुधातलमासाद्य हयहर्तारं निवर्तध्वं कृतार्था भद्रमस्तु व इति। ते च यथापितृनिदेशं रसातलमभ्यद्रवन्खन्यमाने च तस्मिन्धरातलं धारयन्तं धराधराकारमुदञ्चदक्षमैक्षिषत विरूपाक्षं नाम दिग्गजं पूर्वस्यां दिशि यः शिरसा बिभृते नित्यं सपर्वतमहारण्यां धरणिम्। काकुत्स्थ! यदायं महागजः श्रमशमार्थं खेदाद्धेतोश्चालयति मूर्धानमात्मनस्तदा भवति महान्भूमिकम्पः। ते च प्रदक्षिण करणादिभिर्मानयित्वा दिग्गजं जग्मुर्भित्वा रसातलम्। एवं क्रमेण दक्षिणस्यां दिशि महापद्मं, पश्चिमायां सौमनसमुत्तरस्याञ्च भद्रं च भद्रेण वपुषा भ्राजमानं वीक्षमाणा विस्मय प्रतिपेदिरे॥

विभिन्दन्तश्चैवं वसुधातलमुत्तरां ततो गच्छन्तः सागरा दिशं रोषादभ्यखनन्सर्वे पृथिवीं महाबला भीमवेगा यावत्तावददृश्यत कपिलो भगवान्वासुदेवः सनातनः। चरन्तमविदूरत एव तस्य पश्यन्तश्चाश्वं प्रमुदिता हन्त! हयहरश्चायमेवेति क्रोधपर्याकुलेक्षणा सायुधास्तिष्ठ तिष्ठेति ब्रुवन्तः सत्वरमभ्यधावन्। दुर्मेधस्त्वमपाहरोऽश्वमस्माकं विद्धि नः सम्प्राप्तान्सगरात्मजानिति यावत्परिभर्त्सयामासुस्तावदेव रोषाविष्टस्य भगवतस्तस्यहुङ्कारमात्रेण हन्त! दुर्मेधसस्ते सर्वेऽपि भस्मराशीकृताः। ततश्चिरमनागतानां कृते पुत्राणामत्यन्तं तप्तः सगरः स्वनप्तारं तेजसा समिद्धमाज्ञापयामास। अंशुमंस्त्वमस्यंशुमानिव परन्तपस्तेजसा भ्राजमानः कृतविद्यः शूरश्च। गतिं पितॄणामन्विच्छ येनाहारि तुरगस्तस्य च अन्तःस्युर्भौमानि सत्त्वानि महान्ति वीर्यवन्त्यप्यतः प्रतिष्ठस्व साकमसिना कार्मुकहस्त इति। सोऽपि बिभ्रदाज्ञां राज्ञः शिरसा पितृभिः खातपूर्वमनुरुध्याध्वानं सायुधः पर्यटन्महातेजाः पूज्यमानदिग्गजं सुरासुरादिभिरुपसद्य प्रदाक्षिणनमस्कारपुरस्सरं प्रसाद्य च पितॄन्प्रति परिपप्रच्छानामयं तथा वाजिहर्तारमपि। स प्राह स्मासमञ्ज! कृतार्थस्त्वमश्वेन सह सीघ्रमेष्यसीति। एवमेवाभ्यधाय्यंशुमानन्यैश्च त्रिभिराधैतैर्हरित्सिन्धुरैः। प्रमोदमानस्तत्रायासीद्यत्र भस्मराश्यकारिषत रोषबलेन भगवता कपिलस्य स लघुविक्रमः

पितरःसर्वे सागराः । पश्यन्नसमञ्जात्मजः स दुःखसन्तप्तहृदयः कामञ्चुक्रोश मुक्तकण्ठं येन दृषदोऽपि तदानीं ध्रुवं द्रवेयुः । यज्ञियञ्चाद्राक्षीदविदूरतश्चरन्तं तुरगम् । पुरुषव्याघ्रः कर्तुकामः स जलक्रियां कृते पितॄणामटाव्य मानोऽपि निकटे नापश्यत्कमपि सलिलाशयम् । तदानीमनुजिघृक्षया प्रत्यक्षतां प्रपन्नं मातुलं च पितॄणां सुपर्णमनिलसगरिमाणमतिथीचकार नेत्रयोर्वीराणामंशुमानग्रेसरः । वैनतेयश्च मातुलः सौमतेयानामित्थमाचख्यौ, सर्वलोकहितगङ्गाया· भूलोकेऽवतारणान्निर्वृत्तमेतत्सर्वं समञ्जसमेवेत्यन्तरभिसंहितवान्महाबलो नरव्याघ्र ! मा शुचस्त्वं, वधोऽयं यतःसम्मतो लोकस्य । महाबलवत्त्वेन प्रायश्चित्तमर्यादातिक्रान्तपापवन्तश्चैते यतः कपिलकोपपावके शलभायिता अतः सलिलं लौकिकं नार्हसि दातुमेतेभ्यः । यतः स्मर्यते

"चण्डालादुदकात्सर्पाद्वैद्युताद्ब्राह्मणादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥

उदकं पिण्डदानञ्च एतेभ्यो यद्विधीयते ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥ " इति

कुरुष्वातः सलिलक्रियामेतेषाङ्कृते गङ्गायाम् । लोकपावनी सा यद्याप्लावयेद्भस्मराशीकृतांस्तर्हि क्लिन्नमेतत्तया भस्म सकलं नेष्यति षष्टिं पुत्रसहस्राणि स्वर्गं लोकमतः प्रापय देवलोकान्महीतलं तां यदि शक्नोषि । अश्वञ्चाहृत्य गच्छन्नर्हसि परिसमापयितुमपि यज्ञं पैतामहं महान्तमिति । आकर्ण्य च सुपर्णभणितमंशुमानादाय हयमतिवीर्यवानायान्महायशाः ततो महीक्षितमासाद्य दीक्षितं यथावन्न्यवेदयद्वृत्तं वचनञ्च गरुत्मतः । सगरश्च घोरमंशुमतः श्रुत्वा वाक्यं, यथाकल्पं यथाविधि च क्रतुं निर्वर्तयामास । इष्टयज्ञश्चोपज[1]गाम पुरीं, गङ्गाया आनयनेऽनधिगच्छंश्च कमपि निश्चयं त्रिंशद्वर्षसहस्राणि बिभ्राणश्च राज्यं दिवं जगाम । ततः प्रकृतिभिरभिषिक्तोंऽशुमान्दिलीपनामनि पुत्रे सन्निवेश्य राज्यं पुण्ये हिमवच्छिखरे गङ्गावतरणाय तपस्तेपे सुदारुणं द्वात्रिंशच्च सहस्राणि वर्षाणि । अन्ते जगाम तपोधनः स्वर्गमपूर्णमनोरथः । दिलीपोऽपि महातेजाः श्रुत्वा वधं पैतामहं बुद्ध्या च दुःखोपहतया निश्चेतुमनीशानः कथं गङ्गावतरणं कथं वा तेषां सलिलाक्रिया कथं चैनां स्तारयेयमिति बभूवातितरां चिन्तातुरः ॥ समये चैतस्मिंश्चिन्तयतस्तस्य विदितात्मनः परमधार्मिकःपुत्रो जज्ञे भगीरथो नाम । बहुभिरिष्ट्वा दिलीपो यज्ञैः प्रशासन्राज्यं त्रिंशद्वर्षसहस्राणि नरर्षभः पुत्रमभिषिच्य भगीरथं पितृुद्धरणकृते कमप्यगतो निश्चयं व्याधिना कालधर्ममुपेयिवांश्च कर्मणा स्वार्जितेन राजा जगामेन्द्रलोकम् ।

भगीरथोऽपि राजर्षिरनपत्यः प्रजाकामो मन्त्रिष्वाधाय राज्यं गङ्गामवतितारयिषुराससाद गोकर्णम् । यस्मिंश्च दक्षिणदिक्स्थतीर्थराजे स तपोऽतप्यत दीर्घमूर्ध्वबाहुः पञ्चतपा मासाहारश्च बर्षसहस्राणि जितेन्द्रियगणः । प्रीणितश्च द्रुहिणः सुरगणैरभ्यर्णमागम्य बभाण भगीरथमथ तप्यमानं, महाभाग भगीरथ प्रीतोऽहमस्मि तपसा वरं

---

1, आयावर्तात् ।

वरय सुव्रतेति । भगीरथश्च कृताञ्जलिरुपस्थितः प्रार्थयांबभूव भगवन्यदि प्रीतो भवान्यद्यस्ति च फलं तपसः सगरस्यात्मजाः सर्वे मत्तः प्राप्नुवन्तु सलिलं स्पर्शमात्रेण स्वर्गतेः प्रदायकेन येन भस्मनि गङ्गायाः किञ्च प्रपितामहा मे स्वर्गमीयुरमेयप्रभावाया इक्ष्वाकूणां नः कुलं सन्तत्यर्थं नावसीदेच्च यथा, वितरताद्वरं तथा नान्यं तृतीयं वृणे वरमिति पूर्वापरोपकारितां स्फोरयन्नात्मनो महात्मा ।

लोकपितामहोऽप्यन्वग्रहीन्महारथ ! त्वमजनिष्ठा यथार्थनामा भगीरथ इति । इक्ष्वाकुकुलवर्धन । महत्तर एष मनोरथस्ते भवतादवितथः । हैमवतीमेतां धारयितुं गङ्गां परमेश्वर एवैकः शक्तस्ततः स नियुज्यतां प्रसाद्य हरः । यतः सर्वंसहापीयं नैव सहेत धरित्री पतनं हैमवत्याः स्वरवतरन्त्या इति । तदनु गङ्गाम्प्रति निगदन्वत्से ! राजानमेनमनेनसमनुकूलानेहसः प्रदानादनुगृहाण घृणयानणीयस्या, गृहिणी च श्रीमच्छङ्करशीर्षेण भविष्यन्तीति, नियोज्य मधुरव्याहारमनोहरं सह मरुद्गणैर्जगाम लोकमात्मनः पूज्यमानः ।

तदन्वाजानदेवानामपि पूज्ये च पङ्कजभवे गतवति, महाप्रभावं भगवन्तं भवं प्रत्यङ्गुष्ठाग्रनिपीडितां तन्वानो वसुमतीं वसुमतीनाथः संवत्सरमुपास्तापाकिल्बिषो राजर्षिर्भगीरथः । पूर्तौ च संवत्सरस्य सर्वलोकनमस्कृतः पशुपतिरित्थ प्रीतात्मा स्म व्याहरति पार्थिवं धारयामिपुरा ध्रुवं हैमवतीमित्युत्पादयन्प्रमोदं प्रमथनाथः ॥ श्रुत्वा व्याहृतिमुमाकान्तस्य नितान्तं क्रोधसमिद्धा हैमवती स्वरापगा आगस्कृतमभिमत्य शङ्करमहङ्कृतिप्रौढ्या ढौकमाना महत्तरं रूपं वेगमुद्वेगजनकञ्च सुदुःसहमाना स्वस्याः सर्वंसहायामवतारमकूपारायितायाः कृपा विरहितेव भगीरथे भाव्यमाना मानातिगगम्भीरिमप्राग्भारपरिभास्वरा भास्वरमपि श्रुतिशिखरेषु चन्द्रशेखरं स्रोतसा मे नयामि पातालमित्यचिचिन्तत्केवलमनवलम्ब्याबलास्वभावं स्वभावसुभगापि सन्दर्भे तस्मिन् । गर्वमखर्वमस्याः सर्वज्ञो विज्ञाय शर्वोऽपि सर्वात्मा तामभिक्रुध्यंश्चक्रे विनिश्चयं तां तिरोभावयितुम् । साप्यपप्तत्पुण्या पुण्यतरे मूर्धनि रुद्रस्य हिमवत्प्रतिमे दुर्गमे राम ! जटामण्डलगह्वरे । स्वस्या व्याप्नुवन्त्या अपि त्रिविष्टपं समग्राया हन्त ! गङ्गाया हरशिरोजटाटव्यां दूर्वाग्रलग्नहिमकणिकायमानतैवोदपद्यत सपदि, यतो नावकाशमलभत क्लेशेनाप्य क्रशीयसा हरशिरोदेशे प्रतिभेव मन्दप्रज्ञानां समाजे महाविदुषाम् । सा कथञ्चिन्निर्गत्य महीं प्राप्तुमास्थितापि वितथीकृतसर्वप्रयत्ना मोहितात्यन्तं हन्त ! महिताप्यस्तङ्गमितावलेपा संवत्सरगणान्बहूंस्तत्रैव बभ्राम जटामण्डलं भ्रान्त्वा प्रान्तं प्राप्तापि, अन्ततस्तत्प्रान्तभागतोऽपि निर्गमं न लेभे, प्रान्तभागेऽपि तन्मध्यत्वभ्रमस्य मायया भगवतो त्पादनात् । तामपश्यन्विमनायमानः पुनस्तपस्तेपे स नृपः । तेन तोषितस्तां हरो विससर्ज बिन्दुसरःप्रति ॥

यच्च हिमवति निर्मितं ब्रह्मणा स्वसङ्कल्पमात्रेण परमरमणीयम् । विसृज्यमानायाश्च तस्यां जज्ञिरे सप्त स्रोतांसि । तासु च ह्रादिनी पावनी नलिनीत्येतास्तिस्रः प्राचीं जग्मुर्दिशं गङ्गाः सुभगाः शिवजलाः । सुचक्षुः सीता सिन्धुश्चेत्यपरा महानद्यस्तु प्रतीचीमर्च्यमानतामुपगताः । सप्तमी तु भगीरथपथमन्वगात् । राम ! स्वर्गा

1. ऐश्वर्यषट्कमुच्यते भगइति सोऽस्यास्तीति भगी । ईलक्ष्मीर्विजयश्रीरूपा तद्युक्तो रथोयस्येति शाकपार्थिवादित्वात्समासः । भगीचासावीरथश्चेति भगीरथः ॥

काशभूमिषु तिसृषु वा गमनाद्दिक्षु नाम जातमस्या विद्धि त्रिपथगेति गङ्गाया भगवत्याः ॥ दिव्यमास्थाय स्यन्दनं प्रयान्तममुं राजर्षिमनु स्यन्दमाना जगाम गगनाच्छङ्करशिरस्ततश्च धरणिङ्क्रमेण श्रित्वा तीव्रारवपुरस्सरं प्रसृप्त्या देदीप्यमाना ।

मत्स्यकच्छपशिशुमाराद्यैर्यादोभिरितस्ततस्सम्पतद्भिरितरैश्च शरारिप्रभृतिभिरम्भःपतत्रिभिरशेषसुषमां पुष्णती निष्यन्दमाना पर्यष्कार्षीद्गङ्गा वसुन्धरामाभरणायमाना ।

तदानीं देवर्षिगन्धर्वसिद्धा नगराकारैर्विमानैर्हयवरैर्वारणैश्च प्रेक्ष्याः पारिप्लवमधिश्रिताश्च कतिपय्यो देवताः सर्वेऽपि गगनाद्गाङ्गतां गङ्गां समुदसहन्त सङ्गताः समवलोकितुम् । भुवने गङ्गापतनमनुत्तममद्भुतञ्च दिदृक्षूणामृभुक्षप्रभृतीनामृभूणामाभरणमणिघृणिभिः कीर्णा धरणिरनणु पर्यहसीदिवाकाशं श्रिया विद्युद्विद्योतितम् । वेगवशात्सहस्रधा कीर्यमाणैः फेनौघैर्धवलैश्च मरालैः संप्लवद्भिरुवाह सुरवाहिनीयमधिगता मेदिनीं मेदुरतरा शारदाभ्रैरुद्भ्राजितस्य काञ्चन श्रियमशिश्रियदसंशयमाकाशस्य । क्वचित्प्रोषितागतपतिदिदृक्षासन्धुक्षितेव सती द्रुततरं, क्वचिदभिसारिकेव सारङ्गलोचना कुटिलं, क्वचित्सत्सु व्याजिहीर्षन्तीव योषिद्दृजु, क्वचिन्नवोढेव वधूर्विनतं, क्वचिदधिसुरतमधिगतवैयात्येव युवतिरुद्धूतं, क्वचिच्चङ्क्रमणरामणीयकेनान्तःकरणहरणनिपुणेव नर्तनवारवरवर्णिनी शनैः शनैर्दशरथराजकुमार ! ददृशेऽसदृशामन्दसुन्दरस्पन्दा च सेयमस्यन्दत गङ्गा हृदयङ्गमा । क्वचित्सलिलेनैव सलिलं स्वयूथकलहव काममभ्यहन्यत । क्वचिच्च पाषाणस्खलनादिनोर्ध्वमुखङ्गत्वाच्चैस्तरां पुनरप्यत्युच्छ्रायः पतनहेतुरिति नीतिं सत्यापयितुमिव पयो गाङ्गं स्वयमपप्तद्वसुधातलम् । देवी चैषा, कृतिरिव[1] कालेन सिद्ध्या, भक्तिरिवेश्वरप्रसादेन संविदा, विद्येव विनयेन पात्रतया सन्ततिरिव सदाचारेणाभिवृद्ध्या, कवितेव गुणवत्परामर्शेन कीर्त्या, वागिवार्थेन व्यक्त्या,[2] जातिरिव पदार्थेन क्रियया व्याप्तिरिव लिङ्गपरा मर्शेनानुमित्या, साध्वीव भर्त्रा ज्ञानसम्पत्त्या, कादम्बिनीव शिखरिणा सरिता, रतिरिव मन्मथेन चेतोवृत्त्या, विद्युदिव मेघेन व्योमण्डल्या, प्रभेव प्रभाकरेण भूम्या, श्रीरिव पुरुषोत्तमेन धर्मलक्ष्म्या, वैदुषीव गुरुणा शिष्यशेमुष्या, प्रकृतिरिव पुरुषेण संसृत्या, अनुभूतिरिव संस्कारेण स्मृत्या, भणितिरिव निपुणिम्ना वशीकृत्या कलेव कौशलयोगेन फलेग्रहितया, प्रतिमेव समाजेन प्रशस्त्या, सन्ततिरिव वंशेन विशुद्ध्या गीतिरिव लयेन साहित्या, लतेव पादपेन विपिनश्रिया, मणीव सुवर्णेन परिष्कृत्या, त्रिपथगा परमेश्वरेण भारत भूम्या भगवती सङ्गच्छमानाच्छस्फटिकसङ्काशा काममचकासामास ।

स्वतः पवित्रं श्रीमच्छङ्करदिव्योत्तमाङ्गसङ्गवशात्पवित्रतरं, स्वर्गादिभ्योऽप्यभ्यर्हितायामस्मद्भारतमातरि स भक्ति निपातात्पवित्रतममिति निर्मलमेतत्सलिलं त्रैपथगमभूतपूर्वां प्राप्य सङ्गतिं कामपि स्पृहणीयां सौजन्यैक

---

1. कृतिः=प्रयत्नः
2. व्यक्त्या व्यञ्जनया ॥

जन्मभूमिं भूमितलवासिभिस्त्रिदिवेशाः सिद्धगन्धर्वमहर्षिभिः प्रहृष्यन्तस्तीव्रवेगात्स्नातु[1]मशक्नुवन्तः पस्पृशुर्धाराः, कतिपये सस्नुश्च धृतिमन्तो देवा, आकाशगङ्गाया अपि संस्कारवतीमिमां त्रिपथगामभ्युपगच्छन्तस्त्रिकरणशुद्धिं संशोध्य स्वात्मनः कृतार्थ्यकार्षुस्तराम् । प्रशशंसुश्च सह देवैः साधवः सन्यासिनो बलिष्ठा धर्मनिष्ठा लोकपावनाः सर्वे, सकललोकपावनीं गङ्गाम्बिकां, सर्वलोकपितरं भगवन्तं शङ्करमुभावप्यनुग्राहयितुं प्राप्तप्रभावतया प्रभावतीं भारतमातरञ्च "यदि शिवो गङ्गां न धारयेत्तर्हि पूज्या पूज्यायां धरण्यां नोपलभ्येत । तथा च लोककल्याणं नस्याद्धारणे तु हन्त ! सर्वं सिद्धमि"ति । काकुत्स्थ ! शापात्प्रपतितपूर्वा ये गगनाद्वसुधातलं तेऽपि कृताभिषेका भूत्वा गतकल्मषाः पुनराकाशमाविश्य प्रतिपेदिरे स्वान्स्वाल्लोकानल्पे च कृतधियः कुशलाः स्पृहयन्तो भारतवर्षाय ज्यायसे च स्वर्गादिभ्यो गङ्गालाभलोभाविष्टाः प्रतिष्ठामत्रैव काममविन्दन्त सानन्दम् ।

भगीरथमनु गङ्गां ताञ्चानु स्वस्तिवादमुखरैः ऋषिभिर्देवा दैत्यदानवराक्षसा गन्धर्वयक्षप्रवराः सकिन्नरमहोरगा अप्सरसश्च समुन्मिषद्धर्षा अनुजग्मुः पूजयन्तः कुटजाद्यैः स्रवन्मधुभिः प्रसूनैस्तरतमभावमभावयन्त ऐकमत्यात्प्रीत्या ।

ततो यजमानस्य सतो जह्नुमहामुनेर्महात्मनः सम्प्लावयाम्बभूव यज्ञवाटमन्वटाट्यमाना गङ्गा भगीरथम् । न्यविशतेयं स्वयमेवागत्य गङ्गा मे यज्ञशालां कृतार्थीचिकीर्षन्ती मामम्बा भूरिकृपया यज्ञञ्चाहो ! भाग्यमेतन्ममेति गङ्गोपासकावतंसः, काममभिनन्दन्नपूर्वाञ्चाधिगतस्तपोधनः शक्तिमुत्सहमानः स्वयमपिबत्समग्रं पयो गाङ्गं भक्तिपरवशः । ततश्च तुष्टो विसृष्टवान्भगीरथस्तोत्रेण श्रोत्राभ्यां स्रोतस्विनीम्पुनः । अतो जाह्नवीत्युच्यते । तदनुपुरस्कृत्य राजर्षिं, भक्ताग्रतःसरं सरन्ती भर्तारं परितर्पयन्ती पारावारं सागरं साध्वी प्रपूर्य स्रोतोभिरत्युच्छ्रितैरगस्त्यपीतपाथसं भगीरथयत्नस्य सिद्ध्यर्थाय समुपागच्छद्रसातलमप्यलमनुजिघृक्षयान्यादृक्षया ।

एवमादाय यत्नतो राजर्षिर्गङ्गामदर्शद्दीनचेतनः पितामहान्भस्मराशीकृतान् अथ यावदाप्लावयामास पवित्रं पाथो गाङ्गं सर्वांस्तावदेव धूतपाप्मानः सर्वे ते प्राप्ता रघूत्तम ! स्वर्गं पितामहा अधिगता महनीयताम् ! सर्वलोकप्रभुर्ब्रह्मा जहार भगवान्ब्रह्मापि । पितामहास्ते देववद्याता दिवम् । सागरस्य जलं यावत्स्थास्यति तावत्सगरात्मजाः स्वर्गे प्रतिष्ठास्यन्ति । यत इयं त्रीन्पथो भावयति ततस्त्रिपथगेति भवति स्मृता । यतस्त्वया भुवि प्रादुर्भावितातो दुहितृकल्पेयं तव समाम्नायते प्रथितेन भागीरथीति नाम्ना । हन्त ! तव पितृपितामहाभ्यामपि तेजीयोभ्यां दिलीपांशुमद्भ्यामसाधितमद्भुतं चिन्तयितुमपि दुष्करमितरेषामश्रुतपूर्वमेतत्साहसं लोकैकशुभावहमप्रत्यूहं निरवर्तिकृत्यं परममञ्चितं भवता वपुष्मतेव केनाप्यतिशयितेन समुद्यमेन फलेग्रहिणा । सत्यप्रतिज्ञस्त्वमसि महद्भाजनं यशसाम् । पितामहानां सर्वेषां कुरु जलक्रियाम् । स्वस्ति तेऽस्तु गमिष्यामि स्वं लोकम् । गम्यतां नृप इत्यन्तर्धत्त । समृद्धार्थः स्वपुरं प्रविश्य विज्वरः प्रशशास राज्यं वासव इव । राम ! विस्तरोऽभिहितो गङ्गायाः । भद्रं ते । सन्ध्याकालोऽतिवर्तते । धन्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यञ्चैतद्गङ्गावतरणं यः श्रावयति विप्रेषु क्षत्रियादिषु च प्रीयन्ते तस्य पितरो दैवतानि चायुः कीर्तिश्च वर्धते ॥

---

1. सलिलं प्राप्य स्नातुमित्यन्वयः । [illegible] ॥

## क्षीराब्धिमथनं लक्ष्मीकल्याणञ्च ॥

अथ राघवः स्वपूर्वमहत्तरस्फारतरकीर्तेरिव प्रवहन्त्याः शुभ्रशुभ्राया अभ्रगङ्गायाश्चरित्रस्य च भगवतः कार्तिकेयस्य श्रवणेन सलक्ष्मणो निशीथिनीं नीत्वा प्रातर्निर्वर्तिताह्निकमुपगत्य विश्वामित्रं प्रणिपतन्नात्मीयमावेद याम्बभूवान्निर्भरानन्द भूमानं व्यजिज्ञिपदिति, भगवंस्तराम सरितां प्रवरामिमां त्रिमार्गगाम् । यतस्त्वरित मागतेयं विज्ञाय प्राप्तमिह भवन्तमृषीणामर्हा पुण्यकर्मणां नौः सुखात्तीर्णा । आकर्ण्य भणितिमृषिवृषभः सर्षिसङ्घः सराघवश्च नाविकैः कुतुकोद्यत्प्रातिस्विकाजातिगीतैः कारयामास सन्तारम् । तीरमुत्तरमासाद्य गङ्गाया निषद्य च क्षणं पश्यन्तःपुरीं विशालां ज्यायसीञ्च स्वर्गादपि विशालाभिधानामभिप्रतस्थिरे । महाप्राज्ञोऽथ काकुत्स्थः प्राञ्जलिः पप्रच्छ सकौतुकं पुरीं प्रति विशालां भगवन्राजवंशः कतरोऽत्रवर्तत इति । मुनिपुङ्गवोऽप्याख्यातुमारेभे पुरातनमितिवृत्तं पुरवरस्य । श्रूयतां राम ! शक्रस्य कथां कथयतो मदस्मिन्यद्वृत्तं देशे तदपि सावधानम् । पूर्वं कृतयुगे बलवतां दैत्यानां तथा वीर्यवतामादित्यानाञ्च धार्मिकाणामुदियायैवंधीरमराजरनिरामयतायै कृत्वा क्षीरोदमथनं प्राप्नवाम रसममृतरूपं रसायनमिति । ततो निश्चित्य मथनं, योक्त्रं कृत्वा वासुकिं, मन्दरं विधाय च मन्थानममितौजसः सुरासुराममन्थुस्तरां संहताः । संवत्सरसहस्रानन्तरञ्च योक्त्रसर्पशिरांशि दशन्तिशिला दशनैर्दर्शनभयङ्करैरत्युग्रमुद्रवमुर्विषम् । येनोत्पतितेन हालाहलेन कालानलमपि कबलयितुमुज्ज्वलेनात्युल्बणेन सकलोऽपि लोकः समवालोकि ज्वालामालाभिरलं दग्धः । अथ दिवौकसः सर्वेऽपि कृत्वा हाहारवं घोरं त्रायस्व त्रायस्वेति क्रोशन्तश्च शरणार्थिनः शङ्करं पशुपतिं महादेवं रुद्रं जग्मुः स्तुवन्तस्तिग्मकरसहस्रसप्रभं भगवन्तम् । ततस्तत्रैव सत्वरं प्रादुर्भवञ्शङ्खचक्रधरो हरिरुवाचैनमनीचप्रकृतिं सुलभं शूलभृतं भर्गङ्कृत्वा मन्दहासममन्दहासास्पदवै भवेभ्यः प्रति सुपर्वभ्यः । देवसार्वभौम ! मथ्यमानेऽस्मिन्नुदधौ दैवतैर्यदुपस्थितं भवति पूर्वं तत्त्वदीयं यद्राजसेऽग्रेसरः सुराणामतोऽग्रपूजामिमां मन्वानोऽस्मत्प्रार्थनया गृहाणेदं प्रभो ! विषं विधत्स्व लोकानां भविकं भवदेकसाध्यमित्युदीर्य सत्वरमन्तरधत्त ।

शम्भुरपि भगवानुदीरणानुसारेण शार्ङ्गिणः शरणागतत्राणपरायणः पूर्णो घृणया गीर्वाणेषु गरलं करालं हालाहलं नाम लीलया करे कलयन्कबलयामासामृतमिव पुरस्तात्त्रिदशानामीश्वरतां यथार्थयन्स्वात्मनः क्षेमञ्चिकीर्षु र्जगतामाशुतोषः । गतवति च भगवति भर्गे पुनरपि ममन्थुः काकुत्स्थ देवासुराः । अथ मथनादुन्मथितोऽहं मूवं मेति भीतिमित्येव प्रविवेश पातालं मन्थपृथ्वीधरो बत ! मन्दरोऽपि । ततोऽस्ताविषुर्मधुसूदनं दिविषदः पीयूष लिप्सया निर्विंदमनासाद्य प्रसादयितुमृमुक्षप्रभृतयो लक्ष्यैकचक्षुष्काः पुष्पवच्चक्षुष्कं, प्रभो ! पाल्यास्मान्क्षिति भृतमेतमुद्धरेति । श्रुत्वेति भक्तपराधीनो वैकुण्ठः कामठं वपुरास्थितः पृष्ठतः कृत्वा पृथ्वीधरमध्युदधि शिश्ये हरिः । लोकात्मा स केशवः पर्वताग्रमपि हस्तेनाक्रम्य स्थित्वा च देवानां मध्ये हन्त ! ममन्थ स्वयमपि पुरुषोत्तमः प्रदिदर्शयिषुरिव प्राभवमात्मन इति सङ्गिरमाण एव स्वैरं रोचयामास राघवस्यात्मप्राक्तनोदन्तात्यन्ता नभिज्ञताभिनीतिचातुरीमन्तरेवाभिनन्दन्गाधिनन्दनो मन्दस्मितेन केवलमभिव्यञ्जयन्निरञ्जनस्य रञ्जयितुञ्जग ज्जनिभाजः । अपूर्वकथकताभिनयकुशलः स कौशिकोऽपि रसिकः सोत्साहमनुस्यूतयति स कथां सचमत्कारं

कौसल्यात्मज ! वर्षाणां परं सहस्राद्दण्डकमण्डलुपरिमण्डितदोर्दण्डो मार्तण्डसहस्रप्रदीप्रः प्रद्युम्नावलेपलोपिरूपः कलितानल्पाकल्पः पुराणपुरुषकल्पः कोऽप्युदस्थाद्यस्य समुदितस्येव लोकभागधेयस्य धन्वन्तरिरिति विदुर्नामधेयम् । अप्सु चक्षीरात्मसु निर्मथनाद्योरसस्तस्मादुत्पतिताश्च या अभात्राघव ! वरा विलासिन्यस्ता भवन्त्यभिधीयमाना अप्सरस[1] इति । असङ्ख्येयाभिः साकं परिचरिकाभिः षष्टिः कोट्य उद्बभूवुरप्सरसः सर्वाः सुवर्चसः न ताः प्रत्यगृह्णन्देवदानवा इति पर्यगण्यन्त गणिकायमानतया रमण्यः साधारण्यः । ततः कन्या वरुणस्य महाभागा वारुणी सुरा परिग्रहमार्गणमातन्वत्युत्पपात । पिष्टादिविकृतेरेव निषिद्धत्वात्सुराया, निषेधशास्त्रस्य, मनुष्यविषयत्त्वाचादितेः सुतास्तामनुमत्या हरेरसुरेषु च ग्राहयितृषु पर्यग्रहीषुः कामं हर्षुलाः अतः सुरा[2]व्यपदिश्न्ते । उत्तस्थुश्च तत उच्चैः श्रवा नाम हयः कौस्तुभो नामरत्नश्रेष्ठः सोमदेवश्च । तुरगस्तुरासाहं कौस्तुभः कैटभजितञ्चाभजत । अयुर्वेदमयोऽनामयस्य दायकः स महातेजा जगाम साधारणतां लोकरक्षणतत्परो भगवान्धन्वन्तरिः ।

पुनरपि प्रवृद्धोत्साहाः क्षीरवारिधिं क्षोभयामाञ्चक्रिरे च चक्रिणः प्रेरणया सुरासुराः सर्वे । दीर्घादथकालालीलालास्यकलाविलासरसिका नीलालकोल्लासिनी रूपसम्पत्समृद्धा [1]श्यामा श्यामाम्भोदवपुषमपि विमोहयन्ती पुरुषोत्तममदभ्रैर्विभ्रमैरभ्रमुचङ्क्रमणरमणीया रमणीमणिरिन्दिरा स्फुरदिन्दिन्दिरसन्दोहपरिस्पन्दरमन्दारहारसेदुरकरसरोरुहमनोहरा प्रादुरभूद्भुवनमाता । सर्वाभरणपरिपूर्णा सर्वलक्षणलक्षिता रत्नकोटीराङ्गदसुभगा कुञ्चितमूर्धजविजितचञ्चरीकनिकुरुम्बा रणन्मणिमेखला शिञ्जानमञ्जीरा प्रत्यग्रद्रुतजातरूपसरूपवपुषा भ्राजमाना चतुर्भुजाऽम्बुजावासा सुवासा गुणानां पूर्तिश्चतुर्भुजादन्यत्रापश्यन्ती करतलकलितमालिकामर्पयन्ती कण्ठे उत्कण्ठमाना पुरुषोत्तमस्य पश्यत्स्वनिमिषेषु विनम्रशिरोरम्या श्रीनिवासयति स्म पूजितं भजमाना वक्षःस्थलं पुण्डरीकाक्षस्य । यस्मिंश्च क्षणे देवदुन्दुभयो नेदुर्ननृतुरप्सरसो जगुः कलं गन्धर्वाः पुष्पाणि ववृषुः ऋषयः प्रहृष्यन्तः । आकर्ण्य च कल्याणं विश्वामित्रमुखात्किमप्यौत्सुक्यमाविवेश मनसि राघवस्य स्वपूर्ववृत्तस्मरणकारणेन । मुनिरपि राम ! आगमय[3]स्व निर्वर्तयितुकाम एव हि तवागमैकवेद्यस्य कल्याणं लोककल्याणमूलमहमभ्युपेत इति ध्वनयन्मधुरमन्दहासेन पुनर्जगाद । नरश्रेष्ठ ! तदनुपदमुदतिष्ठत्तथैवानुत्तमममृतम् । अस्य च कृते महानासीत्कुलक्षयः, प्रजह्रुनिर्जरा दनुजांस्ते चैतानिति । तदन्वेकतामेत्य राक्षसैर्यदाबलवन्तोऽलक्ष्यन्त दैत्यास्तदा स्वीयामाश्चर्यशक्त्यात्मिकामास्थाय मायां विष्णुरद्भुतयोषिदाकृतिं परिगृह्यापजहारामृतञ्च सत्वरं तेभ्यः । सम्पिष्टाश्च तदा युद्धे विष्णुना प्रभविष्णुना येऽभिमुखं गताःसमस्ता दितिसुताः । विष्णुनैवमुपोद्बलितः स जिष्णुर्निषूदितदैत्यैरादित्यैः प्राप्य राज्यं प्रशशास निष्कण्टकं निष्कल्मषैराराधितोऽत्यन्तमृषिगणैः परिणूतः ।

---

1. पृषोदरादित्वात्साधु ।
2. अर्श आद्य चा ॥
3. मा त्वरिष्ठः ।

# मरुदुत्पत्तिः ॥

हतेष्वेवमथ दैत्येषु परमदुःखिता पुत्रशोकेन दितिरुपेत्य भर्तारं राम ! मारीचं काश्यपमिदमब्रवीत् ।

भगवन्नहमस्मि संवृत्ता हतपुत्रा महाबलैस्ते पुत्रैः । शक्रस्य हन्तारमिच्छामि पुत्रं दीर्घतपसात्यन्तमूर्जितं साहं तपश्चरिष्याम्यनु[1]जानीहि । गर्भं मे तादृशामनुगृहाण करुणयेति । निशम्य शोकसन्तप्ताया उक्तिं दितेस्तस्या प्रत्यवोचत काश्यपोऽपि भवत्वेवं स्वाचे भद्रं शुचिर्भव तपोधने ! शक्रस्य हन्तारमाहवे पुत्रं जनयिष्यसि । संवत्सर सहस्रपरिपूर्तिपर्यन्तं यदि शुचिर्भविष्यसि तर्हि नियतं प्राप्स्यसि मत्तः पुत्रं त्रैलोक्यैकभर्तारमिति । सादरं स महातेजाः परिममार्ज च तां समालभ्य पाणिना तादृशपुत्रोत्पत्तिप्रतिबन्धकदुरितध्वंसविधये । ततःस्वस्तिमुक्त्वा च ययौ कश्यप स्तपसे । दितिः परं ततःपरमहर्षिता कुशप्लवनमधिगम्य पूर्वस्थानं विशालाया विशालाक्ष्यपि निमीलिताक्षी दारुणं तपस्तेपे । कुर्वत्याश्च तीव्रं तपस्तस्यां विनयादिगुणसम्पत्समृद्ध्या वरिवस्यां विस्तारयामास वासवः प्रशस्यमानः । अग्निकुशकाष्ठपयःफलमूलाद्यैरन्यैश्च यथाकाङ्क्षं सहस्राक्षः समाहृतैर्भूरि परिचचार गात्रसंवहनैश्च श्रमापनयनैरप्रमत्तः सर्वेष्वपि कालेषु । अथ वर्षैर्दशभिरूने वर्षसहस्रे गते परिचर्यया परमप्रीता प्रोवाच पुरुहूतं विनतमतिमात्रं वत्स ! वत्सराण्यवशिष्यन्ते दशैव । भद्रं ते द्रक्ष्यसि भ्रातरं, यं पुत्रमहं याचितवती त्वन्निधनार्थं तं तव जये समुत्सुकं विगतवैरं विधास्ये भ्रातृस्नेहवन्तञ्च त्वद्भ्रातृकृतं भोक्ष्यसे त्रैलोक्यविजयं तेन साकं विज्वर इत्यार्जवेन । कस्मिंश्चन दिवसे दिवसकरे च मध्यं प्राप्ते मध्याह्ने शयन प्रसङ्गाभावेनोपविशन्त्या आसन एव तस्या निद्रापारवश्यान्नम्रं शिरो विशीर्णमूर्धजं संसक्तमभवत्पादयोः ।

पश्यन्नशुचिं तां वृथा गर्वितेयमिति जातहासः प्रमुमोदे जातं रन्ध्रान्वेषणफलमिति । धैर्यवान्स वृद्धश्रवाः प्रविश्य [2]शरीरविवरं शतकोटिना टीकमानः किमपि क्रौर्यं राम ! तस्याः सप्तधा बिभेद निर्दयं गर्भम् । वज्रेण भिद्यमानो वलभिदो गर्भश्च रुरोद सुस्वरं येन दितिरबुध्यत । मा रुदो मा रुद इति शक्रः शङ्कमान एव रुदन्तमपि गर्भं बिभेद परमभास्वरम् । अथ यावन्न हन्तव्यो न हन्तव्यइत्युच्चैश्चुक्रोश दितिस्तावदेव मातुर्वचनगौरवा त्प्राञ्जलिर्वज्रपाणिर्मातरमभ्यभाषत यतो देव्यशुचिरस्वपः पादयोः कृतमूर्धजा ततोऽहं लब्धान्तरः शक्रस्य मम हन्तारमाहवे गर्भमभिन्दं सप्तधा तदेतत्क्षन्तुमर्हसि मातरिति । भिन्ने च सप्तधा गर्भे परमदुःखिता दितिः सहस्राक्ष मचष्ट दुर्धर्षं स्पष्टं कृत्वानुनयं बलसूदन देवेश नायमपराधस्तव । यतोऽहमेवाद्भुतं मम गर्भाय सुदुर्लभाय गता परमशुचिभावं भावविरहिता भाग्यविपर्ययेण । उपहतेऽस्मिन्गर्भे किञ्चिदिच्छामि विधातुं श्रेयः । प्रत्येकं "गगनः स्पर्शनो वायु रनिलः प्राणः प्राणेश्वरो जीव इति विभक्तसप्तायवाः [3]सप्तेमे वातस्कन्धा गणात्मानः सन्तु लोकपालाः ।

---

1. विना भर्त्राज्ञां तपश्चरणायोगात् ।
2. योनिविवरम् ॥
3. विष्णुपुराणे, आवहप्रवहसंवहोद्वहविवहपरिवहपरावहाः सप्तैरिताम रुताः ।

मरुदभिमानिदेवतात्वान्मारुद इति त्वत्कृतोच्चरणेन च [1]मारुता इति विख्याता ममात्मजा इमे दिव्यरूपा दिवि पुत्रक ! चरन्तु । तेष्वेको ब्रह्मलोकमपर इन्द्रलोकं तृतीयोऽन्तरिक्षं विष्णुपदाख्यं विष्णुलोकं, चत्वारश्च शिष्टा दिशश्च चतस्रः सहस्राक्ष ! तव शासनाच्चरिष्यन्तः प्रभवन्तु सुता मे देवभूता इति । श्रुत्वा च दितेर्वचनमवोचत शचीपतिः प्राञ्जलिः सर्वमेतद्यथोक्तं ते भविष्यतीति दिविषद्वृषभोऽपि । कौसल्यात्मज ! तावेवमुभौ कृत्वा विनिश्चयं मातापुत्रौ तपोवनात्कृतार्थौ जग्मतुस्त्रिदिवमिति कथयद्भ्यः संशृणुमहे । स एष देशो दाशरथे ! यत्र तपःसिद्धां मातरमेवं परिचचार महेन्द्रः । इक्ष्वाकोःपुत्रः परमधार्मिक उत्पन्नोऽलम्बुसायां विशाल इति विश्रुतः । तेन चेह स्थानेऽकारि पुरीयं विशालेति । विशालस्यात्मजो महाबलो हेमचन्द्रस्तस्य च सुचन्द्रस्तस्य धूम्राश्वस्तदनु सृञ्जयस्तदनन्तरं सहदेवस्ततः कुशाश्व एतस्य च प्रतापवान्सोमदत्तः काकुत्स्थश्च सौमदत्तिरस्य च पुत्रो महातेजा दुर्जयोऽमरप्रख्यो नाम्ना सुमतिर्भूपतिरधिवसति पुरीमिमां सम्प्रति सम्प्रतिपन्नप्रभावः । विशालमतयश्चैते वैशालिकाः सर्वे नृपाःस्फुरन्ति प्रसादादिक्ष्वाकोरक्षीणसम्पदः सुधार्मिकाः सत्यपराक्रमा द्राघिष्ठायुषश्च नित्यं प्रशस्यमानाः पुरुषायुषादपि चिरञ्जीविनीभिरनुरज्यमानाभिः प्रजाभिः । काकुत्स्थ ! वत्स्यामो वयमिहाद्य श्वःप्रभाते द्रक्ष्यसि नरश्रेष्ठ ! नृपश्रेष्ठं जनकमिति । नृपतिः स सुमतिः प्रतीत्य समागतं राघवाभ्यां सह विश्वामित्रं सबान्धवं उपाध्यायगणैः प्रत्युदगच्छत् । अननुभूतपूर्वामर्हणामर्हद्भ्यस्त्रिभ्यश्च यथायथं विधाय वसुधाधिपः प्राञ्जलिर्निजगाद गाधितनुजं धन्योऽस्म्यनुगृहीतोऽस्मि यस्य भगवतो विषयं मामकं भवतः प्राप्तस्य महर्षेर्विशिष्य च कुमाराभ्यां दर्शनमेतदघटिष्टाघसङ्घातविघातक्षममक्षमत्वान्मे कुत्राप्यटीकमानस्य ।

समागमेऽस्मिन्न सुलभेऽन्योन्यसमाकलितकुशलप्रश्नौ कुतूहलिनौ मुनिनृपशार्दूलौ विलेसतुरलं हर्षुलावन्ते च यथार्थाभिधः सुमतिर्वसुधाधिपः पप्रच्छ ! मुने ! काविमौ कस्य वा कुमारौ किमर्थं दुर्गमेऽत्र पथिचरतश्चरणाभ्यामेवारुणसरोजमृदुलाभ्याम् । एतौ हि स्फुरतस्तरां कुमारावधरितश्रीकुमारौ रूपेणसमुपस्थितयौवनाविवाश्विनौ शिवकुमारसुकुमारौ शक्रसमपराक्रमौ पद्मपत्रविशालाक्षौ हर्यक्षसदृक्षावधृष्यतायां सविलासगमने च वृषभोपमौ गीर्वाणलोकादिव धरणिमवतीर्णौ चन्द्रसूर्याविवागतौ क्षितितलमप्यम्बरमिव स्वैरमलञ्चिकीर्षया वरायुधधरौ परस्परेतरसादृश्यासहौ सुदुःसहौ द्रष्टुमपि प्रत्यर्थिनामिति ।

मुनिरपि विन्यवेदयद्यथा वृत्तमयोध्याधिपतेर्दशरथस्यैतौपुत्रौ नाम्ना रामलक्ष्मणौ मम यज्ञसमाप्त्यर्थमानीतौ । सिद्धाश्रममनुप्राप्य राक्षसावभिहत्य चेह प्राप्तौ नृपेति । परमं हर्षितश्च राजर्षिरकार्षीद्दषिलेखर्षभाय सरामलक्ष्मणाय समाराध्य विविधं यथाविधि सुमतिरतिथिसत्क्रियाम् ।

निशामेकामध्युष्य विशालामुषस्युषर्बुधवदिद्धो दीधित्या विश्वामित्रः कृताह्निकः सह सार्वभौमकुमाराभ्यामुदसहत प्रस्थातुं प्रति मिथिलां सुषुमया काममतुलाम् । मुनयश्च जनकस्य पुरीं निरीक्ष्य मिथिलामशिथिललक्ष्मीविलासां साधु साध्विति प्रशशंसुरुच्चैस्तराम् ॥

---

1. मारुद इत्यस्य मारुतेति रूपं पृषोदरादित्वात् ।

# ॥ अहल्या शापमोक्षः ॥

अनुपदं पदनीयमदनीयपचेलिमफलभरविनम्रद्रुमपरिसरपरिरञ्जितं जितचैत्ररथं रथाङ्गमुखविहङ्गमहृदयङ्गम सरित्सरोवरं वरगुण[1]समीरणमीरणमार्गातिगामिप्रकृतिसौभाग्यं भाग्यवदेकभोग्यमाभाति मुनिसार्वभौमेदमुपवनं पवनो द्धूतपादपं पादपाश्लिष्टलतिकं लतिकोत्फुल्लपुष्पं पुष्पभ्रमद्भ्रमरं भ्रमरोद्यद्रीङ्कारं रीङ्कारमुखरिताशावकाशं, निकुञ्ज पुञ्जमञ्जुगुञ्जद्विजराजिसंरञ्जितञ्च जाग्रदजस्रं हृदयावर्जने । अथाप्ययमाश्रमो दृश्यतेऽत्र विश्वामित्र ! मुनिविरहितोऽपि प्रकाशमान एव श्रिया दरिद्रदपि विपश्चिदिव । हन्त ! कस्यैष इति राघवः पप्रच्छ ।

कौशिकोऽप्युपन्यास्थदास्थया लघु श्रीमत्काकुत्स्थपादपाथोजपरागस्पर्शमहिमप्रकर्षप्रचिकाशयिषयेव तत्र र्षिभ्यः प्रहर्षाद्रघुवृषभ । पुरा गौतमस्यायमासीदाश्रमः सर्वसौभाग्यैकविश्रमावास इव भासमानो मुनिवासवस्य । योऽयमस्मिन्नहल्यासहचरश्चचार संवत्सरांस्तपः सुबहून् । कस्मिंश्चन दिने सङ्क्रन्दनो विदन्नसान्निध्यं गौतमस्य[2] वेषं दधानः सुरवरिष्ठोऽपि स्थविष्ठो धिया परं परोपभोगाय वैदिकस्य विलासिनीत्यमिमानजन्यमदेनान्धो भवन्नेत्य शच्या अपि सुरुचिराममन्दसौन्दर्यसौकुमार्यलावण्यनिध्येकदेवतां दीव्यन्तीमहल्यामनृतुकालत्वान्नायमवसर इति प्रतिषिध्यमानोऽपि नितम्बिनि ! कामाद्भोगमभीप्सवः सुन्दरि ! कथं प्रतीक्षन्तामृतुकालमतः सङ्गमं वाञ्छामि कुञ्चितकुन्तलोद्यच्चञ्चरीकमधुरे मधुरस्मितमनोहरे रुचिराधरे सङ्गच्छस्वेत्यनुनिनाय ।

सापि स्वतपसा,[3] कथं प्रतीक्षन्तामृतुकालमिति वचसा, वासवस्यैवात्मनि बहुकालमभिलाषश्रवणेन चा श्रमवर्तिप्राणिजातस्य शङ्काभावाय गौतमवेषोऽयमिन्द्र एवेति निश्चिन्वानापि स निरुपमविभवः स्वाराण्मामभिलष तीति दिव्यरतिकुतुकातिरेकपरतन्त्रा हन्त ! गौतमधर्मपत्न्यपि प्राप तदा सुत्रामपरतन्त्रतामपत्रपा । अथ पुरुहूतं कृतार्थेनान्तरात्मना सुरश्रेष्ठ ! कृतार्थाऽस्मि प्रभो ! गच्छ शीघ्रमितः सर्वदा रक्ष मानदात्मानं माञ्चेत्यूचे ऽहल्या मुनेश्चकिता शापाच्चकितहरिणीप्रेक्षणा तत्क्षणं तपस्विवरवर्णिनी । तुराषाडपि बत ! विशिष्टस्त्रीचरित मित्थमिति, रक्षणं सर्वथा दुर्लभमिति, गौतमतपोभङ्गस्य मदभीप्सितस्य जातं निर्वर्तनमग्रिमशापभयमल्पमेवेति चाभिसन्धाय प्रहसन्सुश्रोणि ! परितुष्टोऽस्मि गमिष्यामि यथागतमिति वदन्यावदुटजान्निश्चक्राम मुनिं प्रति शङ्कितः ससम्भ्रमं तावददर्शत्प्रविशन्तं तपोबलसमन्वितं गौतमम् । यावत्त्रासाच्छुष्कमुखः शतमखः समपद्यत तावदेव सञ्जानानः स्ववेषधरं दुर्वृत्तं वृत्तसम्पन्नो मुनिः परमक्रुद्धः शशाप यदकर्तव्यमकृथा मम रूपेण दुर्मेधस्त्वमतो भव विफलः सहस्रभगव[4]स्त्वञ्च तेऽस्त्विति । तत्क्षणादेव पेततुर्वृषणौ धरणौ सुत्राम्णोऽपि । अहल्यामपि, त्वं

---

1. शैत्यसौरभ्यमान्द्यानि गुणाः ।
2. मध्यमणि न्यायेना सान्निध्यवेषपदयोरन्वयः ।
3. पातिव्रत्यस्याप्युपलक्षणम् ।
4. यदस्पृहयस्त्वमेकस्मै भगाय ततः ।

स्वकृतमकार्यं स्मारं स्मारं तापात्प्रम्लानमानसा स्वरूपेणादृश्या, शिलाप्रतिमारूपेण सर्वदृश्या च वायुमात्रभक्षतया निराहारप्राया भस्मशायिनी निवत्स्यसि त्वमस्मिन्नाश्रमे सहस्राणि संवत्सराणामिति शप्तवानपि गौतमः स्वभावदयालुरप्रार्थितोऽपि तया यद्यसौ हतकः सुरर्षभो मद्द्वेषभृन्नागमिष्यत्तर्हि साध्वीयं ध्रुवं नैव समभंस्यतेति सतीत्वस्य न्यूनं मनागप्यनाकलयमानः स्वयं, लोकदृष्ट्या महानप्येष दोषः क्षुद्रः प्राथमिकश्च[1] दग्धो नङ्क्ष्यति तूल इव पञ्चमहापातकसङ्घातपलालजालविनिर्मूलनाय जाज्वल्यमानेन कल्पान्तानलसदृक्षतपआशुशुक्षणिना पातिव्रत्यझञ्झावातसन्धुक्षितेन क्षणादेव, तत्रापि पश्चात्तापातिशयसमित्स्तोमसमिद्धेन । तपसः किमसाध्यमस्ति । हिमवद्वृद्धयसमस्तदोषपरिहारपुरस्सरमभ्युदयसमुदयविश्राणनेसुरद्रुमायमाणं हि स्फुरति तपः । किम्बहुना निरस्य संसारमनादिं वितरति ब्रह्मज्ञानमपि "तपसा ब्रह्म विजिज्ञासस्व" इति हि श्रवणम् । यथासन्दर्भं मानुषप्रकृतिमात्रसुलभोऽयं प्रमादः सर्वथा मर्षणीयो मादृशैर्महर्षिभिः । ज्ञानैश्वर्यादिभिर्भ्राजमानांश्च्यावयितुमिन्द्रादीन्स्थानेभ्यः प्रभवतो मे तपसो भङ्ग इष्टो भगवतो यदन्तर्यामिनः प्रेरणया मा प्रसाङ्क्षीत्स्थानस्यागस्तेषामिति स्वशरीरक्षणिकसमर्पणलक्षणमकृत त्यागं देवहितैषिणी भर्त्रभेदेनैव पुरुहूतं भावितवती । मन्त्रप्रश्नवलादवगम्यते नवोढात्वमपि कन्यकानां गन्धर्वोपभोगानन्तरमेवेति । किं गन्धर्वादिभ्योपि देवसार्वभौमो मघवा न्यूनः । अतो देवकृतमानुषीधर्षणं नावकल्पेत तावते दोषाय । सम्भाव्यमानोऽपि स दोषः शाम्यति तपसैव । तपः प्रभावमजानतामपवादान्न भेतव्यं देवानाम्प्रियाणां धर्ममर्मविदग्रिमैर्विपश्चिद्भिः । लोकस्य तत्रापि प्राकृतस्य परेषु दोषारोपणमात्रप्रवणस्य च प्रीणनं नावश्यकमशक्यमकिञ्चित्करञ्चेत्यभिसन्धित्समानो भगवाञ्श्रीरामचन्द्रचरणारविन्दपरागस्पर्शमात्रेण नियतमेष्यति पवित्रतां धर्मनिबन्धस्तोमनियुतविहितप्रायश्चित्तसमुच्चयैरपि दुःसम्पादामियं महाभागेति वीक्षमाणश्चक्षुषार्षेणाभाषत यदा दाशरथिः श्रीरामो वनमेतद्घोरं श्रयिष्यति दुर्धर्षस्तदा पूता भविष्यसि । दुर्वृत्ते! तस्यातिथ्येन लोभमोहविवर्जिता स्वं वपुरुपगम्य मुदा मां प्राप्स्यसीत्यनुगृह्णन्नाससाद तपसे हिमवच्छिखरं मुनिशेखरः । ततो जातवेदः प्रभृतीनवादीद्वास्तोष्पतिस्तुषितांस्त्रस्तवदनो भो मा भ्रंशः स्थानेभ्यो भूदस्माकमिति शुभेच्छया गच्छन्गौतमतपोभङ्गफलकमुत्पादयितुं क्रोधं तदीयाश्रममस्मि व्यभिचरितस्तस्य धर्मदारेषु । येन पर्यभूयेऽफलत्वं प्रापितः शापेनेत्थमिति पर्यदेवयत् । अग्निमुखैश्च प्रसादिता देवैः पितृदेवताः संहता मेषवृषणावुत्पाट्य समजीघटन्सहस्राक्षेण । राघव! गौतमतपःप्रभावेन तदाप्रभृति वृत्तो वृत्रहा मेषवृषणः । पितृदेवा अप्यफलान्भुञ्जाना मेषान्दातॄन्योजयन्ति सवृषणमेषदानफलेनाविकलेन ।

तदागच्छ रामभद्र! भद्रं ते पुण्यकर्मणस्तस्येममाश्रमम् । त्वदागमनावधित्वाच्छापस्य देवरूपिणीं महाभागामिमां तारयाहल्यामपांसुलानां कुरुष्वाग्रे परिगणनीयाञ्च घृणया चिरस्याकाङ्क्षन्तीं ते स्वागतम् । श्रुत्वा च विश्वामित्रव्याहृतिं सह लक्ष्मणेन प्रविश्याश्रमपदमदर्शन्महाभागां द्योतितप्रभाञ्च तपसा सुरासुरनरैर्दुर्निरीक्षामम्भःसंभृताभ्रमध्यस्थप्रभाकरसमप्रभां वृक्षलताकुसुमान्तवर्तित्वेन तुषारावृतपूर्णचन्द्रमःप्रतिमां धात्रा प्रयत्नान्निर्मितामिव

---

1. स्वरूपनाशमकृत्वा वायुभक्षेत्यादिवयोनुरूपशापप्रदानेन चापलात्सकृत्परपुरुषप्रवृत्तास्त्रीनियमेन शोचयित्वा- पुनःसङ्ग्रहेति सूचितम् । अभ्यासेतु पातित्यम् । "निन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः" इति गौतमधर्मसूत्रम् ॥

दीधितिमतीं मायामिव विमोहनीं श्रियमपि ह्रेपयन्तीमिव पुरतः प्रादुर्भवन्तीं देवीमहल्याम् । शापान्तमेत्य दर्शनपथमागताया राघवावतिथी तस्यास्तदा जगृहतुः पादौ । सापि स्मृत्वा गौतमोक्तिमतिमात्रसुलभतया विश्वामित्रेणोपास्थितीकृतेऽपि राघवेऽक्षीणपातिव्रत्यलब्धदिव्यज्ञाना परमपुरुषे पश्यन्ती श्रुतिशिखरसम्मतम साधारणं परत्वं सपदि राघवस्य पीडयामास चरणौ । अर्घ्यपाद्याचमनीयाद्यैरातिथ्यं तस्या मूर्तिमत्या इव भक्तेर्यथाविधि विहितं प्रत्यग्रहीत्प्रीत्या च चक्रवर्तिकुमारस्तपस्विन्याः । तदानीं महत्यासीत्पुष्पवृष्टिस्त्रिदिवेशानां समं देवदुन्दुभिनिःस्वनैः । प्रववृधे च नृत्तमतिकुतुकं साकं गीतिभिर्गन्धर्वाणामप्सरसाम् । सर्षिसङ्घाश्च देवास्तपोबल विशुद्धाङ्गीं तामहल्यां प्रशशंसुरुच्चैरुदञ्चद्रोमाञ्चस्य वशे स्थितां भगवतो गौतमस्य साधु साध्वित्याम्रेडयन्तः समुद्यम्य हस्तमुपरिष्टात् । महात्मा गौतमोऽपि सुखितोऽत्यन्ताय सहाहल्यया विधिवत्तेपे महातपास्तपः । गौतमेन गार्हस्थ्यैकप्रसितेन कीर्त्या सितेन च सम्यगाराधितोऽभ्यनुज्ञातश्च प्रतस्थे काकुत्स्थः प्रति मिथिलाम् ।

## ॥ विश्वामित्रेण जनकं प्रति रामवृत्तान्तनिवेदन पूर्वकं धनुर्दिदृक्षाकथनम् ॥

प्रावीविशत्ससौमित्रिं दाशरथिमथो मिथिलामशिथिललक्ष्मीविलासां विलासवतीभिरलं भासमानामसमान सुषमयुवजनमनोहरां हराङ्घ्रिकिङ्करसुराजपरिपालितां पालितचातुर्वर्ण्यां वर्ण्यपथातिगवैभवां भवाद्रिसध्रीचीननिकेतनां केतनशतसमुद्योतितां तपसा द्योतितो भगवान्विश्वामित्रः ॥

परितःपुरीं निरीक्षणमाणो लक्ष्मणः स विशेषेण विसिष्मिये । यदमंस्त समृद्धिमन्मैथिलेषु समुन्मिषदीर्ष्याणां [1]समाहारः [2]स्वरितो भवत्यनिमि[3]षाणां ध्रुवमिति । पुरुषोत्तमो रामश्च रामा[4]भिरामताङ्गतश्चङ्क्रमेण मत्तमातङ्गवद्बभौ चक्षुः सफलतां विदधानः पुंसामप्यसंशयं मोहनः । तपोधनश्च गाधिसूनुर्ज्ञानिराजजनकेन सङ्गतिं प्राप्स्यन्नमेयमविन्दतान्तःप्रमोदम् । कौसल्येयश्च कौशिकाय ससौमित्रिरैशानीं दिशं गतं प्राप्तो यज्ञवाटं जनकस्य यायजूकाग्रेसरस्य यज्ञसमृद्ध्या सुप्रीतो निवेदयामास ननादेशनिवासिनामृषिवाटाः शकटीशतसङ्कुला दृश्यन्ते श्रुतिपरिशीलनशालिनां भूसुराणामतो विधीयतामसद्वासयोग्यो देशः कश्चिदिति । विश्वामित्रोऽपि सलिलादिसमृद्धमकमल्पयद्देशमनुकूलं कमपि । व्यद्योतत नराकृति हुतवहत्रयं विस्मापयमानमालोकमानानखिलाँल्लोकान् ।

प्राप्त मुप श्रुत्य राजकुमाराभ्यां विश्वामित्रं मिथिलाधिपः पुरस्कृत्य शतानन्दं पुरोहितमनिन्दितमृत्विग्भिः सामात्यबान्धवः प्रत्युद्व्रज्य जनकः पूजयित्वार्घ्यपाद्याचमनीयाद्यै रनवद्यः सह मुनिभिरधिमेध्यासनमुपवेश्य

---

1. समाहारः=समुदायः
2. स्वारितः=स्वर्गं प्राप्तः
3. ईर्ष्यानुदयाय निमीलनन्त्वसम्भवि तेषामनिमिषत्वादिति भावः ॥
4. स्त्रीणामाभिरामताम्

विशाम्पतिः कृताञ्जलिः कलयन्कुशलप्रश्नं कल्याण्या वाण्या व्यजिज्ञपदित्थं स्वागतमविगीतचारित्रः—भगवन्नपि स्वागतमद्य मे समजनि यज्ञसमृद्धिः फलञ्च लब्धं यज्ञानां भगवद्दर्शनेन । यतः प्राप्तोऽसि यज्ञोपसदनं ब्रह्मन्सह मुनिभिरेभिर्धन्योऽहमस्म्यतः काममनुगृहीतोऽस्मि । ब्रह्मन्द्वादशावशिष्टानि यज्ञस्य दिनानीत्याहुः ऋत्विजः शिष्टाः।

द्वादशदिनावसाने भविष्यति सुत्याहोमो यत्र साक्षात्करिष्यथ भागार्थिनः क्रतुभुजः पूज्याः ! काविमौ कुमारौ शक्रपराक्रमौ सारसदलनेत्रौ स्तम्बेरमगमनमनोरमौ हर्यक्षवदप्रधृष्यौ स्कन्दविशाखाविव वृषस्कन्धौ रूपौदार्यगाम्भीर्यसौकुमार्यै र्दृष्टिचित्तापहारिणौ काकपक्षधरौ खड्गतूणीरधनुर्धरौ कथं परस्परसदृशावङ्घ्रिभ्यामतिमृदुभ्यामिह किमर्थञ्च प्राप्तौ पुष्करमिव पुष्पवन्ताविमं विषयं भूषयितुमिति जिज्ञासमानोऽसमानः । पृच्छयमानश्च प्रावोचत राजन्साकेतराजात्मजावेतौ मम यज्ञसंरक्षणार्थं प्रापितौ सिद्धाश्रमम् । अहताञ्च क्रतुविघातिनो यातुधानान् । रक्षःसहस्रावृतेऽध्वनि निर्भीति चरित्वा मध्येमार्गं ददृशतुर्विशालामनुपदमहल्यां तस्याश्च समागमञ्च गौतमेन । उद्देश्यञ्चैतयोः क्षत्रियकुमारयोर्महति ते महादेवधनुषि सारासारपरीक्षणं यत इमङ्गतौ देशमिति। महातपाः शतानन्दोऽपि गाधिनन्दनमुदञ्चद्रोमाञ्चः पप्रच्छ मुनिशार्दूल अपि मे माता तपो दीर्घमुपागता दर्शिता राजपुत्राय । अपि सदकृत पूजयित्वा मे प्रसूराघवं वन्यैरुपहारैः । अपि रामय विन्यवेदि भवतोदन्तः पुरातनः साकं शक्रदुरनुष्ठितेन । अपि समगत माता मे गुरुणा । अपि नाम राघवः पूजितः पित्रा च मे भगवतेति ॥

## ॥ रामंप्रतिशतानन्देन विश्वामित्रचरित्रकथनम् ॥

अथ कौशिकमुखावगतसमस्तमातृशुभोदकोऽर्क इव द्वितीयः शतानन्दः प्रशशंस दाशरथिमुपजातकौतूहलं राघव ! स्वागतं ते नास्ति धन्यतरो राम ! त्वत्तोऽस्ति भुवने । यदन्वग्राहिष्ठाः श्रेष्ठेनर्षीणां विश्वामित्रेण सकनिष्ठः । दिष्ट्या प्राप्तोऽसि पुरस्कृत्यैनम् । लोककल्याणकारिणमचिन्त्यापरिमिततपःशक्तिसम्भृतमेतमधिकृत्य तव गोष्ठारमभिधास्यामि । शृणु सावधानं, पौत्रोऽयं कुशनाभस्य गाधितनूद्भवः प्रशास्ति स वसुधां धर्मविदग्रिमः प्रजापालनजागरूकश्च नैकसंवत्सर सहस्राणि परन्तपस्तपनप्रतिरूपः । कदाचिदक्षौहिणीपरिवृतः क्षोणीनायकोऽयं कृतक्षितिपरिभ्रमणरतिः क्रमशः क्राम्यन्राष्ट्रनगरकान्तारगिरिसरित्सरोवराणि दिदृक्षुश्चाश्रमान्मुनीनां भ्रामं भ्राममुपागमद्भगवतो वसिष्ठस्य विहरणचणमृगगणरमणीयमनन्तशकुन्तैश्चेतोहरं रुवद्भिः श्रवणमधुरं कुसुमितलतालिङ्गितफलभरविनम्रद्रुमवरपरिशोभितमुटजमसकृदाटीकमानसुमनोमनोह्लादकं मादकञ्च प्रकृतिश्रीविलासेन सचेतसाम् । विश्वामित्रस्स विजयिनामग्रेसरस्तत्र ददर्श शीर्णपर्णाम्बुवाताशनांश्च जितेन्द्रियान्मुनीन्द्रान्वालखिल्यवैखानसमुखाञ्शतमुखप्रमुखैरपि गतानुपास्यतामपास्तकिल्बिषान् ।

प्रणताय स्वागतकुशलप्रश्नादिपुरस्सरमासन उपवेश्य विशां पत्ये धीमतेऽस्मै मुनिवरः कन्दमूलफलानि पुष्कलानि प्रेम्णोपजहार । राजा च प्रतिव्याजहार कुशलोक्तिं कौशिकोऽयमग्निहोत्रशिष्यप्रभृतिषु यथासम्प्रदायम् ।

कञ्चित्कालं कोलाहलेन धर्मिष्ठौ श्रेष्ठाः कथयन्तौ कथाः प्रीतावस्तां परस्परमन्ते च सह समग्रैर्बलैर्बलिनस्तव बलभिन्निभस्य भर्तुभुवश्चिकीर्षाम्यातिथ्यं राजर्षे प्रतिगृहाणेति बभाण मुनिसत्तमः । वसिष्ठेनैवमभिहितो महामतिराश्रमे महाराजार्हस्यासम्भवमातिथ्यस्य मनसि स्वयमभिमत्य प्रकाशमचष्ट ब्रह्मन्नहमसि सन्तुष्टस्तवोपचारेण मैत्र्या चेतोहरेण कृतमतिथिक्रिययेति यावत्तावदङ्गीकारयाम्बभूव भगवान्निर्बध्नन्वसिष्ठोऽपि । अभ्युपेतेऽथ पार्थिवर्षभे धूतकल्मषः कल्माषीमादिदेश धेनुं विधीयतां यथाविध्यातिथ्यमस्मै ससैन्याय वसुन्धराधीश्वरायेति । शबला च शिरसा दधाराज्ञां मुनिप्रुराज्ञः । प्रभाववता हि विधीयमान एकादेश उदात्तेनोदात्तश्चकास्ति । सपदि समपीपदत्सम्पत्तोमसमृद्धेनाननुभूतपूर्वं नृपतिना कदापि, धेनुरसौ शबला विस्मापयमाना बृहत्तममातिथ्यं नैकरसैस्स्वादीयोभिरद्रिसध्रीचीनैरोदनराशिभिः सभक्ष्यभोज्यलेह्यचोष्यविशेषैर्वस्त्राभरणाद्यैः निरर्घैः स्यन्दमानाभिरमन्दं वृन्दारकधुनीमप्यधरयन्तीभिर्दधिमधुघृतक्षीरसरिद्भिश्च वैचित्र्यमादधतीभिरभितः स्वाश्रमपदं, विश्रमवृक्षवाटिकापरिसरपरिवर्तिनीभिरहमहमिकया गात्रसंवहनं कुर्वीमहि वयमितेति शश्वदाह्वयन्तीभिः पुरन्ध्रिभिरतिखर्वारवामभ्रूभिरुद्भ्राजितैश्च राजहंसललनातूलिकोपकल्पितमञ्चप्रपञ्चैरास्तृतरत्नकम्बलप्रभाकन्दळितैः ।

यस्मिंश्चाद्भुतरसमहाब्धिमध्ये निमज्जितोऽयं जनाधिपः साकं भोगपराकाष्ठामारूढैरात्मना विस्मृत्य जगदपि तुन्दपरिमृजैः परिजनैर्जनन्यामर्भकैरिव धरित्र्यां विलुठद्भिः । अथ सामात्यभृत्यः सुसत्कृततया तृप्तिमपर्याप्तां प्राप्तो विश्वामित्रः प्रकाश्य स्वीयं हर्षप्रकर्षमृषिमभाषत भगवन्ननर्घं हि रत्नमेतद्यैषा शबला । ब्रह्मन्नहमस्मि रत्नहारी च पार्थिवः प्रदिशैनां वितरामि शतसहस्रं धेनूनामिति । प्रत्यभाषिष्ट वसिष्ठः पार्थिव ! नैव दास्यामीमां पयस्विनीनां कोटिसहस्रैरपि तथा कनत्कनककनिकायानां वा । कीर्तिरिवात्मवतः शाश्वतीयं मम । हव्यं कव्यं बलिर्होमोऽग्निहोत्रं स्वाहाकारवषट्कारौ विद्याश्च विविधाः किं बहुना प्राणयात्रा च ममेत्येतदायत्तमेव भवति समस्तमपि । अतो मनसापि नैव प्रदास्यामीति । ततः क्रमेण शतगुणितवाजिगजगवोष्ट्राष्ट्राष्ट्राङ्गानां समग्राणामभिप्रदर्शयन्विवितितीर्षामृषये तृणीकृतब्रह्मपदेन भगवता तेन प्रत्याख्यातस्तं क्रोधादभिद्रुह्यन्शबलां बलादाचकर्ष । साटोपं नृपभटैराकृष्यमाणा दुःखार्ता कामञ्चुक्रोश पुरस्तादश्रूणि मुञ्चन्ती महर्षे ! किमपाराध्यं तुभ्यं पुत्र्या अपि प्रेमास्पदं, यदुदास्से मां पश्यन्नपि प्रसभमपह्रियमाणामेभिर्ह्रिया विहीनैर्दयया च नृपपाशानुयायिभिः पशुप्रायैः किन्नु साम्प्रतमिति सकरुणं गिरं सङ्गिरमाणा । सुभगे ! किमहं करवै सुरभे ! अहमस्मि तपस्वी कोऽपि ब्राह्मणः । अयं तु भूपालः सेनया चोपोद्बलितो बलीयस्या । किमन्यदस्त्यौदासीन्यान्मे शरणमिति व्याहृतवत्यार्तें पत्यावरुन्धत्या ब्रह्मन्नेव जानीषे निजमसरूपं स्वरूपं, मन्ये द्विजत्वमेवात्र स्फुरति कारणं क्षत्त्रबन्धुरयमातिथेयभवनविनाशमुद्यतः कर्तुं महापाप्मानमपमानममानव एव नूनं, जगच्चक्षुषः पुरस्तात्खद्योतकीट इव कियान् ब्राह्मसम्पत्समृद्धस्य तव । किङ्कर्यहमेकैवालं हतकमेतं कान्दिशीकयितुं यद्यप्यथापि कामधेनुत्वादपेक्षे नियोगं तव । परकाम्यार्थसृष्टावेव हि मम सामर्थ्यं ब्रह्मबलसम्भृतां तादृशकार्यसमर्थत्वेन मां ध्यायन्ननुजानीहीत्यभ्यर्थयाञ्चक्रे । संज्ञामुपलभ्य सृजेति मुनिराजात्ससर्ज. सुरभिरपि हुम्भारवमात्रेण कोटिशः कोपात्पल्लवमुखान्म्लेच्छजातीयान्सहेतीञ्शकयवनान्दीर्घासिपट्टिशधरान्कृतान्तायितानतिमात्रत्रासकरान्यैर्दग्धं पावकैरिव विश्वामित्रबलमखिलं प्रदीप्तैः क्षणमात्रेण । अथावनिपतिशस्त्रास्त्रग्रामेणाकुलीक्रियमाणेषु यवनकाम्भोजैस्सह पह्लवेषु योगतः सृजेति नियुञ्जाने च धेनुं मुनौ

पुनर्योनित ऊधसो रोमकूपेभ्यश्च शस्त्रपाणयो म्लेच्छाहारीताः सकि[1]राता भूयस्तरामुदस्थुरसङ्ख्याः पह्लवा यैरुद्माथि रथगजतुरगपदाति क्षणमात्रात्सङ्ख्यातिगं विश्वामित्रस्य तूलजातमिव झञ्झावातैः। वसिष्ठेन निषूदितं दृष्ट्वा रुष्टमभिधावदायुधस्तोमधरं शतमपि कौशिकसुतानामशलभायत वसिष्ठकालमहानले तत्कालं हन्त? हुङ्कारमात्रेण।

अनुपदमपथि कृतपदतया नाशितसुतशतः शतमुखोऽसौ राज्ञां ह्रीणोऽवाङ्मुखश्च वितथास्त्रशस्त्रग्रामः समुद्र इव निर्वेगः सर्प इव भीष्मो भग्नदंष्ट्र उपरक्त इव तिग्मद्युतिः सद्यो गतः स निष्प्रभतां व्यथितव्यथितोऽपि नैवाप्तः परं निर्वेदमश्रियः सर्वस्या अप्येकं मूलं कुशकुलजलधिमुक्ताफलायमानः पलायमानोऽपि। नियुज्यात्मजमेकं राज्यभरणकर्मण्यप्रमत्तः प्रजाः पालय धर्मेणाहमिव मा भूरित्युपदिश्य शर्वमुद्दिश्य चरितुन्तपः प्रापद्धिमवत्पार्श्वम्। संवत्सराद्बहोरूर्ध्वं वृषभध्वजस्तोषितस्तपसा प्रतिपद्य प्रत्यक्षतां प्रसन्नोऽस्मि वृणु वरमिति वभाण। यदि तुष्टोऽसि भगवन्नष्टमूर्ते! साङ्गोपाङ्गोपनिषद्रहस्यः प्रदीयतां धनुर्वेदः। यानि देवदानवमहर्षिगन्धर्वयक्षरक्षःसु, त्र्यक्ष! विनोपदेशेन प्रसादमात्रात्प्रतिभान्तु मे तानि शस्त्रास्त्राणीत्यवरीष्ट। तथेति वितीर्यान्तर्हिते पार्वतीनाथे दर्पोद्रिक्तः पर्वसमुद्र इव प्रवर्धमानः स वीर्यविजृम्भणेन राजजम्भभिदयमदयं योद्धुं पुनरभ्यधावदरुन्धती बत! जाता विधवेति प्रलपन्नुपांशु वृथाभिमानप्राग्भाराविनम्रः स्फुरन्मदद्विरद इवारण्यो वरेण्यं ब्रह्मर्षीणाम्। प्राप्तश्चाथ भूताविष्टमिव दृष्ट्वा रुष्टं वसिष्ठशिष्यगणाः साकमृषिस्तोमैः पतत्रिणश्च सह मृगैः प्रदुद्रुवुः सुदूरं येन क्षणमात्रेण सगुणमिरिणेन[2] निर्गुणमासीत्पर्णसदनम्। मा भैष्ट नाशयाम्याशु शुष्कतरुमिवाशुशुक्षणिः क्षणात्क्षोणीशपाशमेनमेनःपुञ्जमनाञ्जस्यैकावासमिति गर्जन्तमपि मुनिकुञ्जरवैरिणमनादृत्य द्रुतवति द्रुतं प्राणपरित्राणमात्रपरायणतया सर्वस्मिन्प्राणभृतां व्राते हरितः सर्वा भगवान्वसिष्ठः प्रलयकालमहानलवदलं दुर्दर्शश्चिरसंवर्धितं प्रयतनैः कामनीयकाधानेन शुद्धश्च साधूनां वासेन दुर्बुद्धे त्वमनीनश इदमाश्रमपदं कासर इव [3]सारसमनोहरं सरः। दुराचाराचिरान्नङ्क्ष्यसि ध्रुवमित्यभिक्रुध्यन्गाधितनुभवं, संवर्ताग्निमिव जाज्वल्यमानं ज्वालामालाभिरभ्रंलिहाभिरधूमं यमदण्डमिवापरं जगदण्डनिर्भेदकमात्मनः प्रतिष्ठापयन्दण्डं पुरस्ताद्वसिष्ठश्चण्डकरसहस्रतिरस्कारकः स्फुरणेन क्षत्रबन्धो! स्थितोऽस्म्येष मा भीषयस्व तिष्ठ तिष्ठेति पठन्नपष्ठु। गेहेशूर! यदि पौरुषमाविष्कुरु वीर्यमशेषं ते नाम्नावशेषयामि। जाल्म! क्व ते क्षत्रियबलं क्वच मे ब्रह्मबलं वीक्षस्व क्षत्रियहतकेत्युच्चैर्जगर्जतरां मुनिमृगराजः। विश्वामित्रोऽपीय[4]द्वसं संभृतचराननेहसं वीर्यवतः सुतान्मृशाश्वस्यास्त्रशस्त्रग्रामानचिराजितैर्गिरिजासहचरादस्त्रैर्यावत्प्रायुङ्क्त क्रुद्धस्ताव देवाग्रसत सर्वान्मुनेर्दण्डः प्रचण्डस्तेजसा समुत्तेजितः श्रीमद्ब्रह्मविद्याभ्याससञ्जनितेन। कबलितेषु च तेषु चिक्षेप क्षितिभृदन्ततः कृतान्तस्यापि त्रासकरमस्त्रं ब्राह्मं, यस्मिंश्च क्षणे लोकनाशमशङ्कन्त देवा भृशं बिभ्यतः। तदप्यकबलयद्दण्डः। तदा प्रलयमहानल इव जज्वालालं प्रतिरोमकूपं निष्पतन्तीभिः ऋषिर्ज्वालामालाभिः। अस्ताविषुश्च दिविषदः त्रस्यन्तोऽत्यन्तं प्रसादयितुमनसः प्रभो! निगृहीतोऽयं संहर क्रोधमास्थीयतां शान्तिरिति हस्तोत्क्षेपं व्याहरन्तः।

---

1. ये मुक्तकच्छानार्यद्राविडेभ्योऽप्यवराः॥
2. ऊषरेण।
3. पद्मं हंसश्च॥
4. वसन्ताद्द्वयसच्॥

कथमप्यसहमानो ब्रह्मशत्रुत्वमाससाद वैतथ्यं प्रसादश्च परमेश्वरस्य क्षत्रियपांसने, प्रयत्न इव नियति विपरीतभावे, विवेक इवापाये, गुर्वनुग्रह इव दुरन्तेवसत्युपकार इव कृतघ्ने, लेख इव सलिलप्रवाहे, नय इव खले श्रीविलास इवाधार्मिकेऽस्त्रग्राम इव निसर्गभीरावभ्युदय इव नृशंसे , प्रणय इव दुर्दान्तेष्वनुराग इव गणिकाजने, सदुपदेश इव [1]खट्वारूढे, कार्यक्रम इव पात्रे[2]समिते, प्रतिभाविलास, इव मूर्खसङ्घे एकी भाव इव द्विजसमाजे, विद्याभ्यास इव च सदालसे । ब्रह्मविदपचारो हि सर्वश्रेयोविनाशकः ॥

विश्वामित्रश्च विषसाद कालोऽयमलमननुकूलः । एवं न यदि कथङ्कारं पराजयेयेति । अपागमतां ह्रीश्रियौ च दूराद्भूते च यथा पुनर्नागमिष्यतः । अपि धृत्युत्साहशक्ती पलायाम्बभूवतुरुमे अभ्यस्तमहास्त्रशस्त्रम् । ब्रह्मवित्त्वाद समानमहिम्नां समर्थानां प्रथमाद्वाचामगोचरं प्राप्तः परीभावं मुनेर्मनुजाधिनाथः । विनिकृतश्चान्ते निःश्वस्य "धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् । एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥ इत्युदीरायन्निग्रहमात्मनः स्मारं स्मारं सन्तप्तहृदयो महात्मना बद्धवैरस्तपो महत्समास्थास्ये ब्रह्मताप्रापकमिति कोपादुदूढदृढनिश्चयः प्रेयाय प्रेयस्या सह हरितमगस्त्यसमध्यासिताम् । तत्राप्यथ कामक्रोधाद्यनुवृत्त्या चरतोऽपि तपः सुताश्चत्वारो जज्ञिरे हविष्यन्दो मधुष्यन्दो दृढनेत्रो महारथ इति । पूर्णे च वर्षसहस्रे स्वयमागत्य तपसाहं प्रह्वष्यामि त्वमभूराजर्षिरित्युक्तोऽपि वेधसा दुःखेन समन्युरवादीन्नेदं पर्याप्तं फलं मे तपसः कुर्वीय भूयस्तप उग्रं व्यथयंस्त्रैलोक्यमिति काकुत्स्थ ! तप्यते स्म तपः पुनर्यथासङ्कल्पम् । एतस्मिन्नन्तरे क्षितिभृदिक्ष्वाकुकुलसमुद्भवो नाम्ना त्रिशङ्कुरङ्कुरिताङ्घ्रिरनरपतिशिरोमणिघृणिभि रग्रणीर्धर्मात्मनामैषिषद्वर्ष्मणा दिविषदां पदम् । तदर्थं मां याजयेति प्रार्थयमानः प्रत्याचख्ये कुलपुरोहितेन तदशक्यमिति ब्रुवता वसिष्ठेन । ततः स कर्मसिद्ध्यर्थं दक्षिणस्यां दिशि तपश्चरतः प्रपद्य वसिष्ठपुत्रान्ह्रियावाङ्मुखः प्रणिपातपूर्वं प्रार्थयामास प्रत्याख्यातोऽस्मि वसिष्ठेन, शरण्यानहं गतो वः शरणं, प्रसादये नमस्कारैर्गुरुपुत्रान्याजयत मां कृपया येन यायामहं कायेन स्वर्गमिति । ते च शतमृषिपुत्रास्तस्मायक्रुध्यन्दुर्बुद्धे ! गुरुणा सत्यवादिना निराकृतः कथमन्यान्समन्युरमानं शरणीचिकीर्षसि राजर्षिरिक्ष्वाकुवंश्यः को वात्यक्रमत वद कुलगुरुवचनं त्वमिव नीचो वाच्यतां गतः । तद्याहि यथायातं न शक्ष्यामस्तत्कर्तुं यत्त्रैलोक्यस्यापि शक्तस्य याजने तस्य गुरुमहाराजस्य भवत्य शक्यमिति । एवमप्यविपर्यसनीयस्वदुरध्यवसायः स विशाम्पतिर्गुरुणा गुरुपुत्रैश्चोपेक्षितो युष्माभिरन्यां प्राप्स्यामि गतिमिति यावदवोचत वचनं तावदेव देवतुल्यवर्चसस्ते तपसा वसिष्ठात्मजा जातक्रोधाः सपदि शेपुः प्रतिपद्यस्व वपुश्चाण्डालं येन ते स्वरारुरुक्षायां स्यान्मृत्क्षेप इति ।

व्यतीतायामेकस्यामेव यामवत्यामसीदायसाभरणोऽसितवसनश्चित्यमाल्यानुलेपनः प्रध्वस्तमूर्धजो बीभत्सास्पदं परमस्त्रिशङ्कुश्चण्डालो यं पश्यन्तः पौरा मन्त्रिणश्चानुगाः प्राद्रुद्रुवन्परिहृत्य श्मशानमिव नरेशानं सर्वे सुदूरतः । स च कौशिकं प्रपद्यमानः परमं शरणं निवेद्य च यथावद्वृत्तं निखिलं प्रह्वःप्रणिपत्य भगवन्निष्टं क्रतुशतं मया नैवावापि फलमनृतं

---

1. खट्वारूढो जाल्मः ।
2. भोजनसमय एव संगतो मत्तु कार्ये ।

नोक्तपूर्वं मया कदाचन नैव च वक्ष्यामि। प्रजाश्च पालिता धर्मेण गुरवश्च तोषिताः शीलवृत्ताद्यैरनवद्येन मया। भगवन्मन्ये दैवमेव बलवत्पौरुषन्तु निष्फलमिति। भवानेव परा गतिर्मे पुरुषकारेण परमपुरुष ! निवर्तयितुमर्हसि मे दैवं विपरीतमिति चक्रन्दामन्दम्। आर्तत्राणैकप्रवणः स महात्मा सपद्युदीर्णकरुणो विश्राणयामास कौशिकोऽभयं मा भैषीरैक्ष्वाक ! यज्ञसाह्यकरानाहूय महर्षीन्पुण्यकर्मणः सोऽहं निर्वर्तयामि ते क्रतुम् गुरुशापकृतमेतद्रूपं वेधसाप्य शक्यं विपर्यासयितुम्। यतस्त्वं न जात्या चण्डालस्ततो मत्तपोबलसमुपबृंहितेन यज्ञेन स्वर्गं गमिष्यस्यनेनैव शरीरेण। हस्तप्राप्तं विद्धि स्वर्गं यतस्त्वमवाप्तः शरणं कौशिकमिति। अथ प्रारिप्समानो यज्ञं शिष्यानादिदेश सर्वानृषिगणा नानयत त्वरितं, यदि मद्वाक्यचोदितो नागन्तुमीहते कश्चित् गर्हते वा याजयति चण्डालमिति स भवत्याख्येयो मह्य मिति। ते च तथा कृत्वा, विश्वामित्रं पुनरभिगम्य विनयवीविदन्सविनयं प्रभो ! प्राहुःस्म स्मयमानाः सूनवः शतमह न्धतीपतेः पुरस्कृत्य महोदयं स्वानुयायिनं, क्षत्रियो हन्त ! याजकस्तत्रापि चण्डालस्य। सदसि च सुरर्षयः कथं स्यु र्भोक्तारो हविषाम्। ब्राह्मणा वा कथङ्कुर्युश्चण्डालभोजनम्। कथं गमिष्यन्ति बतायाज्ययाजयितारः स्वर्गमृषयो वा समस्तमेतद्विपरीतमिति। अन्ये तु समागच्छन्ति द्विजातय इति च। श्रुत्वोक्तिमेतां क्रोधसंरक्तनेत्रो ये दूषयन्ति मामदुष्टं दुष्करतपसं भस्मीभवन्तु ते दुरात्मानः सप्त जन्मशतानि च सन्तु मृतपाः श्वमांसनियताशना [1]मुष्टिका नाम निर्घृणा विकृता विरूपाश्च। यददूदुषन्मामदूष्यं दुःशेमुषीको महोदयः सर्वैर्दूषितः प्राणातिपातनिरतो गतश्च निरनुक्रोशतां गमिष्यति निषादतामिति शशाप वशिष्ठवैरनिर्यातनकामः स्वतपोव्ययमगणयित्वा विश्वामित्रः। अग्निकल्पाद्भयेन कुशिकदायादादयजन्मुनयः समेऽपि यथायं नृपः स्वर्गमारोहेत्सशरीरः ॥ विश्वामित्रोऽप्यराजद [2]ध्वर्युः क्रतौ। ततः कालेन महता, भागप्रतिग्रहार्थमाहूता अपि यदा नैवागमन्देवास्तदा संवर्तरुद्राद्वैतमापद्यमानो मुनिः क्रोधेन स्रुवमुद्यम्यावादीत्त्रिशङ्कुं शङ्कुमिव स्थितं त्रिदिवेशानाम्। नरेश्वर ! पश्य स्वार्जितस्य वीर्यं मे तपसः। स्वतेजसा व्रज स्वर्गं सशरीर इति। काकुत्स्थ ! पश्यत्सु च सदस्येषु त्रिशङ्कुरुत्प्लवमान इव जगाम स्वर्गम्। गुरुशापहतस्य ते नास्ति सूचीद्वयसोऽप्यवकाशोऽत्रेति वदन्देवैः पाकशासनः पातयामास गलहस्तिकया त्रिशङ्कुम धस्तादपास्तकृपो येन भीतभीतस्त्रायस्व त्रायस्वेति पपाताावाङ्मुखः। ऋषिश्च रोषमाहारयंस्तीव्रमब्रवीत्तिष्ठ तिष्ठेति। स च ससर्ज यथेष्टमृषिमध्यमध्यासीनः स्रष्टेवापरो दक्षिणस्यां दिशि सप्तर्षीनपरांस्तथा सप्तविंशतिनक्षत्रमालां यथोत्तरतो ध्रुवस्तिष्ठत्यचलस्तथात्र त्रिशङ्कुस्तिष्ठतु।

तं परितो यथा सप्तर्षिमण्डलं तद्वदत्रापि भवतु। तत्र च यथा नक्षत्राणि तद्वदत्रापीति निश्चिचीषुर्निमेष मात्रेण। सृष्ट्वैवं क्रोधादिद्धः पर्याप्तिमनवाप्य तृप्त्याः पुनः स्रष्टुमुपाक्रमतान्यमिन्द्रं करिष्यामि लोको वा स्याद निन्द्रक इति गर्जन्मुनिमृगराजो निर्जरानपीतरान्। ततश्च सम्भ्रान्ताः समेत्य सर्षिसङ्घाः सुरासुरास्तमूचिर उपचितानुनयाः सप्रश्रयम्। महाभाग ! नार्हत्ययं सकायः स्वर्गं यातुं गुरुशापपराहतः पार्थिव इति। कौशिकश्च राज्ञःप्रतिज्ञायारोहणं नानृतमुत्सहे कर्तुम्। शाश्वतोऽयमस्तु स्वर्गः सशरीरस्य त्रिशङ्कोः। नक्षत्राणि स्युर्मामकानि

1. इदानीं डोम्बा इति प्रसिद्धाः।
2. सवनमुख्येति वक्ष्यमाणत्वात्।

ध्रुवाण्येव । सर्वमेतदनुज्ञातुमर्हथेति समगिरत । त्रिदशाश्चान्वमंसत भद्रमस्तु ते । प्रसिद्धादनादिज्योतिश्चक्र मार्गाद्बहिरेतान्यनेकानि मुने ! समन्वितामनुयान्तु स्वर्गनक्षत्राणि ध्रुवमिवैनमपि कामं प्रकाशमानं गुर्वपचारफल प्रकटनायचाधोमुखं त्रिशङ्कुं कृतार्थं कीर्तिमन्तञ्चेत्यभिदधानाः । अभिष्टुतश्चान्वजानान्महातेजा निर्जरैः । ऋषींश्च यथयथं यज्ञार्थमागतान्सभाजयंश्च विससर्ज ॥

अथ यथास्वाङ्गमागम्य निर्वर्त्य च क्रतुं प्रस्थितान्दृष्ट्वा मुनीन्स्वतपोवनवासिन उवाच कौशिको दक्षिणस्या दिश्यस्यामासमन्ताद्व्याप्य स्थितोऽयं त्रिशङ्कुरूपो महान्विघ्नस्तपोनाशकश्च । तच्छायाक्रान्त्या नायं देशस्तपोयोग्यः । दिशमन्यामासाद्य तप्यामहे तप इति । निश्चित्येत्थं पश्चिमायां महात्मा दिशि विशालतपोवनावनीभिर्विननीयायां पुण्य पुष्करतीर्थतीरेषु चेतोहरेषु कन्दमूलफलाशनस्तेपे दुराधर्षमुग्रं तपः । अस्मिंश्च समयेऽयोध्याधिपतिर्नाम्नाम्बरीषो राजर्षिरुपचक्रमे यष्टुम् । परप्रगत्यसहनशीलः पशुमपजहार यजमानस्य बिडौजाः । पुरोहितः ससम्भ्रममुपेत्य पार्थिवमब्रवीद्राजन्नानीतश्च पशुस्त्वत्पापवशात्प्रमादाच्च तावकरक्षिणामपहृतः पशुनाशमुखा इमे दोषा नियतमाघ्नीरन् । महतः कारणं प्रायश्चित्तस्यैतत्पशुनाशलक्षणम् । यावत्प्रवर्तिष्यते कर्मैतत्प्रक्रान्तं ततःप्रागेव पशुमानय नष्टमन्विष्य । तत्प्रतिनिधित्वेन नरं वा क्रीत्वानयेति । गवेषयन्नथाम्बरीषः सहस्रसङ्ख्याभिर्गोभिर्मूल्यभूताभिर्भ्रमित्वा[1] भुवं सजनपदन गरपुण्याश्रमपदामन्ततः प्रपेदे भृगुतुन्दम् । रघुनंन्दन ! यत्र च स सन्ददर्श सभार्यमृचीकं साकञ्चकासतं सुतैः । प्रणामादिभिः प्रसाद्य ब्रह्मर्षिमृचीकं ययाचे राजर्षिर्भार्गव ! यदि विक्रीणीषे शतसहस्रेण गवां पुत्रं पशोरर्थे तर्ह्यहं महाभाग ! भवेयं कृतकृत्यः । यतो भूमिम[2]भ्रम्यं परितो नालभे चान्ते कमपि पशुं यज्ञियमिति । ऋचीकश्च नरश्रेष्ठ ! नाहं विक्रीणीयां कथमपि ज्येष्ठं पुत्रमित्यब्रूत तत्पत्नी च नाहं कनिष्ठं दयितं शुनकमिति । प्रायेण ज्येष्ठा वल्लभाः पितृषु, मातृणाञ्च कनीयांस इति लोकरीत्यनुसारेणोदीरयतोरित्थं मातापित्रोर्मध्यमः शुनःशेफः स्वं प्रत्याख्येयं नावश्यकतयाववुध्यमानोर्था[3]दुदीरयंश्च प्रकाशं राजन्मां नयस्व तनयं मध्यममित्युक्त्वा परिगृहीतवन्तमनु जगाम जानाधिपमभीप्सितलाभेन प्रयान्तं सप्रमोदम् । स्यन्दनमारोप्य क्रीतमृचीकमध्यमपुत्रमागाच्छन्राजर्षिरम्ब रीषः शुनःशेफं व्यश्राम्यन्मध्याह्ने पुष्करे स महायशाः ।

विश्राम्यति च विशांपतौ पुष्करक्षेत्रमागम्य तीव्रं तपस्तप्यमानस्य साकमृषिभि रङ्केऽपश्यद्विश्वामित्रस्य भगवतो मातुलस्यातुलस्य व्याहरन्नेव दीनस्तृष्णया श्रमेण च विवर्णवदनो भगवन्नमे माता न मे पिता न ज्ञातयो नैव च बान्धवाः किमर्थमसर्जिषीति नावैम्यनाथः । त्वं हि त्रयाणां स्फुरसि जगतांपरमस्त्राता । कस्ते भारस्त्राणे मम परमाणोः । पशूकरिष्यति मामेषोऽम्बरीषः क्रीतवानध्यध्वरं ध्रुवं स्वयं बत ! सन्नपि कुटुम्बी । विधिरेव भवति गर्हितव्यः यथा नृपतिरयं स्यात्कृतकृत्योऽहञ्च दीर्घायुरनव्ययस्तपश्चरन्ननुत्तममश्नुवीय तथा त्रातुमर्हसि पितेव पुत्रं मामिति ।

---

1. उदितोवेति क्त्वायां वेद ।
2. भौवादिका द्वाभ्राशेतिश्यन् । भ्राम्यतीति तु दैवादिकस्य भ्रमेः
3. अर्थादित्यस्य प्रत्याख्येयमित्यनेनान्वयः ।

विश्वामित्रोऽथ दीनवत्सलः सान्त्वयित्वा बहुविधं स्वपुत्रान्साह प्रिया मे पुत्रकाः ! शुभार्थिनः पितरो यदर्थमात्मजाञ्जनयन्ति सोऽयमागतः कालः परलोकहितार्थः । अयं मृच्छति शरणं मां मुनिकुमारः । युष्मास्वन्यतमः पशुभूतो नृपतेः कल्पतामग्नितृप्तये नाथवांन्भवतु शुनःशेफः क्रतुश्च राज्ञः सार्थः तर्पिताश्च देवाः कृतञ्च वचो ममेति । इतीरिताश्च कुमारा मधुष्यन्दप्रभृतयोऽभिमानसमभ्युन्नताः सहेलञ्जगदुरुच्चैर्विहस्य यथाग्निहोत्रिणामुपस्थितीकृते दिव्ये पायसादौ पतितं श्वमांसं भवति विघातकं भोजनस्य तथा प्राप्ते च स्वसुतरक्षाप्रसङ्गेऽन्यसुतरक्षेयमवश्यकार्यासद्रक्षाया विघातिकैवेति बत ! पितापि सन्न वेत्सीति । श्रुत्वैतत्क्रोधसंरक्तनेत्रो विश्वामित्रः प्रत्यब्रवीन्निःसाध्वसमसाधवो यूयमवादिष्टानिष्टमधर्म्यमरम्यञ्च दारुणं रोमहर्षणं यतस्तन्मुष्टिकजातिषु वासिष्ठा इव जनित्वाश्वमांसभोजिन संवत्सरसहस्रं वत्स्यथेति । परार्थसाधका हि साधवः परानिव जहति स्वानपि स्वार्थमात्रपरान् । शप्त्वेत्थं पुत्रान् काकुत्स्थ ! कृत्वा भीतिप्रहाणाय मन्त्रितभस्मधूलिप्रक्षेपादिरूपां रक्षामवदच्छुनः शेपं दर्भरशनादिभिर्बद्धस्त्वं रक्तमाल्यानुलेपनः प्राप्य च यूपं [1]वैष्णवमग्नयभिमुखो भूत्वा स्तुहि श्रद्दधदिन्द्रमिन्द्रानुजञ्चैताभ्याङ्गाथाभ्यामिति । गृहीतगाथश्च प्राप्य प्रजानाथमुवा च शुनः शेफः सदो गच्छ राजन्समुपाविशाशु दीक्षामिति । यावद्विशाम्पतिरनुमतः सदस्यैः कृत्वा पशुं शुनःशेफं रक्तमाल्यानुलेपनमबन्धयद्यूपे तावद्देवा स्तावीन्मन्त्रराजाभ्यामृचीकसूनुरिन्द्रमिन्द्रानुजञ्च यथा कौशिकोपदेशम् । प्रीतश्च ततः सहस्राक्षो रहस्यस्तवतर्पितः शुनः शेफाय प्रदिदेशायुर्द्राघीयो राघव ! । प्राप च पार्थिवः शतमखप्रसादेन शतगुणं प्रहर्षितः क्रतुफलम् । धर्मात्मा विश्वामित्रश्च पुष्करे च पुण्यक्षेत्रे तपस्तीव्रमकृत दशसंवत्सरशतानि ॥ वृत्ते च वर्षसाहस्रे सह त्रिदशैरेत्य ब्रह्मा तपसास्मि तोषितस्त्वमृषिरभूरित्यभिधायान्तरधात् । महति ततश्च गतवति काले मेनका नाम काप्यप्सरस्सु मनोज्ञा पुष्करे स्नातुमारभत याचोचितवासोराहित्यादभिव्यक्तकुसुमितयौवनसुभगसर्वाङ्गहृदयङ्गमा जलदमण्डलमध्यवर्तिनी विद्युदिव व्यद्योतत । दृष्ट्वा हृष्टः सद्यः कन्दर्पपरतन्त्रतां प्राप्तः प्रोवाचाप्सरः ![2] स्वात्ते स्वागतं वसेह सह मयाश्रमे मदनमोहितमनुगृहाण मामित्यृषिः । वरारोहा च तथेत्यवात्सीत्तपसश्चासीन्महान्विघ्नः । इत्थं व्यतीयुः संवत्सरा दश तयोः ऋषिमेनकयोः ।

अथ सव्रीडश्चिन्ताशोकपरायणस्तपःप्रहाण्या विचिन्त्य निर्णिनाय निर्द्वापरमेतत्कृत्यं क्रतुभुजामेवेति । हन्त ! काममोहाभिभूतोऽहमत्यवाहयमित्थं हायनान्दशेति तपोनाशादनुतपन्स भिया वेपमानां साञ्जलिञ्च विलोक्य दयमानमानसः स्वमेवापराधिनं मत्वा मधुरैर्वाक्यैस्तां विसृज्य कुशिकात्मजः पर्वतं प्राप्य हिमवन्तं भूयस्तरां तीव्रं तपश्चचार कामस्याप्यकरणं सङ्कल्प्यात्युत्कटब्रह्मचर्यविषयां दधद्बुद्धिं कौशिक्यास्तीरे । वर्षसहस्रमुपासीनात्तपस्तस्मादबिभयुरमर्त्या भृशम् । तैः प्रेर्यमाणो द्रुहिणः सहाभ्यर्णमागम्य मरुद्गणैर्महर्षे स्वागतं वत्स ! तोषितोऽस्मि तपसोग्रेण महर्षिपदमारूढोऽसि कृतं तपसेत्यवदत्सम्बोधनेनापि तद्व्यञ्जयन् । महर्षिशब्दमतुलं स्वार्जितैः शुभैः कर्मभिर्यदिभवानाह देवेशः सत्यमस्मि ततो विजितेन्द्रिय इत्युक्तवति तस्मिन्पद्मभूर्न त्वं सम्पन्नो जितेन्द्रियः प्रयतस्व भूय इत्यन्तरधत्त । ऊर्ध्वबाहुर्निरालम्बोऽथ तपश्चचारात्युग्रमनिलाशनः पञ्चतपा घर्मे वर्षास्वाकाशसंश्रयः शिशिरे

1. "वैष्णवो वैदेवतयायूप" इति श्रुतेः ।
2. अप्सरः शब्द एकवचनान्तोऽप्यस्ति ।

सलिलस्थायी च सत्राण्यहानि वर्षसहस्रपर्यन्तमपर्यन्तप्रभावः कौशिकः । ततो जम्भारिः ससम्भ्रममाहूय रम्भां रम्भोरुं प्रेरयामास प्रलोभय कौशिकमदभ्रैस्त्वं विभ्रमैरिति । विश्वामित्रक्रोधाद्भीतभीतां यासिषं मेति प्राञ्जलिं प्रार्थयमानामससान्त्वत्सुत्रामा भैषीर्मा रम्भे ! शासनं मेऽनुसर सुरहितैषिणः । माधवे सति रुचिरद्रुमे भूत्वाहं कोकिलो हृदयाह्लादकस्तव पार्श्व एव वर्तेय साकं मकरकेतनेन । भेदयस्व तमृषिं लीलाविलासैः सत्वरं याहीति । तथैव सति वृत्तेऽतुलविलासं तस्याः कूजितञ्च कोकिलस्य पश्यञ्शृण्वंश्च कौशिकः सन्दिहानो ध्यात्वा मुहूर्तं तेजस्वी व्यजानात्तत्क्षणमेतत्सर्वं सहस्राक्षस्य कृत्यमिति । तदनु दण्डाहत इव कालसर्पः शशाप रम्भामम्भोरुहाक्षीं काममभिक्रुध्यन्कुशिकात्मजः कामक्रोधजयैषिणं यन्मां प्रालोभयथास्त्वं रम्भे ! ततः शैली प्रतिमा स्थास्यसि दुर्भगे ! दशवर्षसहस्राणि । मत्क्रोधकलुषीकृतात्त्वोद्धरिष्यति त्वां तपोबलसंभृतस्तेजस्वी महान्ब्राह्मण[1] इति । तदनु क्रोधं नियन्तुमशक्तः पश्चात्ततापं रम्भाप्यभूच्छैली । कन्दर्पेन्द्रौ रम्भायै बत ! द्रुह्यन्तावितथमदुद्रुवताम् । इन्द्रियैरनियन्त्रितैर्न लभे शान्तिमात्मनः । परमितो नैव क्रोधं गमिष्यामि न च वक्ष्यामि कथञ्चिदप्यथवा नैवोच्छ्वसिष्यामि यावत्संवत्सरशतमात्मानं विशोषयिष्यामि तावद्यावत्तपसार्जितं मे प्राप्येत ब्राह्मण्यं, तिष्ठेयमनुच्छ्वसन्नभुञ्जानः शाश्वतीः समास्तप्यमानस्य मे यास्यन्ति नैव क्षयमवयवा इति वर्षसहस्रपर्यन्तसङ्कल्पमप्रतिममकृत रघुपरिवृढ ! विश्वामित्रः । अथ ककुभमपि त्यक्त्वा कौबेरीं श्रयन्मुनिः पूर्वांदिशमास्थितः काष्ठमौनमन्वतिष्ठत्तपः सुदुष्करमावर्षसहस्राद्यवतोपहन्येयातां कामक्रोधौ । वार्षसाहस्रिके च पूर्तिमुपगते व्रते कामक्रोधगन्धदुर्विधः प्रारब्धवान्भोक्तुमन्धो[2] भवन्क्षुधान्धोऽयं तपोधनः । तदा पतिरप्यमृतान्धसां परीक्षितुकामःक्रोधविरहमस्य द्विजातिवेषादुपसृप्य ययाचेऽन्नम् । मनागप्यनुदितहार्दविकारोऽसौ प्रदिशंस्तस्मै प्रमुदितोऽन्नं निःशेषं मौनमास्थाय व्रतं तीव्रं पुनश्चरितुमारेभे तपः स्वोत्तमाङ्गस्फुलिङ्गसमुद्र[3]ममनुच्छ्वसन्पुनर्वर्षसहस्रं महर्षिः ।

ततो देवास्तत्तपस्तनूनपाता सर्वे मूर्च्छिताः कश्मलमृच्छन्तः पितामहमुपगत्य प्रोक्तवन्तः प्रजापते ! वृजिनमधुना मनागपि न मुनौ । लोभितेऽ क्रोधितेऽपि बत ! स्फायत एवास्मिंस्तपः । यदभीप्सितमस्मै सपदि प्रदिश्यतां तद्यावन्नोत्सादयेदयं लोकांस्त्रीन्व्याकुलाः ककुभाः सागराः क्षोभिताः पर्वताश्च यतो विशीर्णाः । भगवन्कम्पते पृथिवी स्तम्भितो न वाति वायुर्भास्करश्च निष्प्रभो न भवतीवाभिभूतस्तेजसा मुनेः । तस्माल्लोकेश ! यावन्नस्याल्लोकसर्वनाशस्तावदेव विश्राणय मनीषितं यदि स्याद्देवराज्यमपीति । ततः समरुद्गण एत्य द्रुहिणोऽभ्यर्णमाबभाण ब्रह्मर्षे ! स्वागतं तेऽस्तु तपसा तोषितोऽस्मि । ब्राह्मण्यमसि प्राप्तवांस्त्वं तपसा तीव्रेण । दीर्घमायुश्च ते प्रददामि सदैवतस्तोमः । प्राप्नुहि स्वस्ति[4]भद्रं ते यथासुखं गच्छेति । श्रुत्वा गिरं ब्राह्मीं दिवौकसाञ्च मुदितः कृत्वा प्रणतिं ब्रह्मणे व्याहर्षीद्ब्रह्मर्षिभूतः प्राप्तं यदि मे ब्राह्मण्यं द्राघीयश्चायुस्तर्हि ब्रह्मज्ञान

---

1. ब्रह्मपुत्रो वसिष्ठ इत्याहुः ॥
2. अन्नम् ॥
3. क्रियाविशेषणम् ॥
4. सर्वे=ब्राह्मण्यप्रयोजकतज्जन्मतत्संस्कारादयः । अनेन त्रिपुरुषपर्यन्तं विश्वामित्रस्य ब्राह्मण्यलाभः सूच्यते । इदञ्चानृष्यानन्तर्येति सूत्रः प्राप्ये स्पष्टम् ॥

साधनमोङ्कारो यज्ञसाधनं वषट्कारः समाम्नायाश्च तदपेक्षिताङ्गोपाङ्गैः सह सर्वे[1] एवैते यथा वसिष्ठादीन्सहज ब्राह्मण्यान्वृणानाः कुर्वन्त्यध्यापनयाजनार्हांस्तथा मामपि वृत्वा विदधत्वमिदधातु चायं क्षत्रवेदविदां वरिष्ठो ब्रह्म वेदविदां वसिष्ठो ब्रह्मपुत्रोऽपि मां ब्रह्मर्षिरिति स्वभाषितेन भूषयन्पूषोपम इति। ततश्च दिविषद्भिः प्रसादितश्च वसिष्ठस्त्वमसि ब्रह्मर्षिरेधिषीष्ठा इत्युक्तवान्सख्यञ्चकार। प्रपूज्य च वसिष्ठं विसृजंस्तेजस्वीत्थं प्राप्य ब्राह्मण्यं तपस्वी चरति भुवनं विदधद्भुवनभविक्रमविकलं कौशल्येय! विद्धीत्थंप्रभावोऽयमिति विरमत्युक्त्वा शतानन्देऽहल्यानन्दने रघुनन्दनो मुनिसङ्क्रन्दने गाधिनन्दनेऽपूर्वतामतिं कामपि विन्दमानोऽरविन्दनयनसुन्दरोऽमन्दमियायानन्दम्। धन्योऽस्म्यनुगृहीतोऽस्मि यस्य मे प्राप्तवानसि यज्ञं मुनिपुङ्गव! साकं साकेतनाथपुत्राभ्यां शृण्वंश्च कथाः पुण्यश्लोकस्य तव सह सदस्यैर्नाहमवापं तृप्तिं पर्याप्तां कर्मकालोऽयमुपस्थितो लम्बते च रविमण्डलं श्वः प्रभाते मां पुनर्द्रष्टुमर्हसि स्वागतं ते तपस्विन्ननुजानीहीति प्रार्थयमानं प्रशस्य विश्वामित्रो जनकं विसृज्य पूज्यमानश्च महर्षिभिः सहितश्चक्रवर्तिपुत्राभ्यामभिजगाम स्वं निवेशम्॥

## जनकेन सीतालाभप्रकारकथनं रामेण कृते च धनुरारोपणे तद्दानप्रतिज्ञानञ्च॥

अथ प्रजाधिपः प्रभाते जनकः कृतकर्मा समानीय विश्वामित्रमाराध्य यथाविधि सराघवं भगवन्स्वागतमस्तु ते भवानाज्ञापयतु मां किङ्करं किङ्कार्यमिति प्रह्वः प्रोवाच। प्रत्यब्रूत ब्रह्मर्षिर्महाराज! दशरथात्मजावेतौ राजतो जगद्विश्रुतौ क्षत्रियावतो भवति साम्प्रतं यदेतौ धनुषस्ते स्पृहयतस्तरां दर्शनाय। दृष्ट्वा यथावदिष्टं प्राप्स्यत इति। जनकः श्रुत्वैतद्व्याजहार धनुरागममार्गमागमविदग्रिमः। सकुतुकमाकर्ण्यतामिति[2] निमेः कूटस्थस्यनः षष्ठोऽभूत्ख्यातः पृथ्व्यां[3] देवरात इति। दक्षयज्ञवधे रोषात्त्र्यक्षः सहस्राक्षप्रभृतीनुवाच धनुरुद्यम्य देवा यन्मे स्विष्टकृदादिभागानर्थिनो नाकल्पयत तच्छिनद्मिवः शिरांसीति। ततो विमनसश्च सुमनसः प्रसादयामासुः परमेश्वरम्। प्रीतश्च प्रविततार धनुरेतदमृतान्धोभ्यः। दैवैश्च दत्तं देवराताय पूजार्थं शत्रुवधार्थञ्च वितरत [4]मत्स्वत्वेनेति प्रसादनपुरस्सरं प्रार्थयमानाय प्रमथाधिपभक्तावतंसायास्मत्पूर्वमहत्तराय। यश्चैतन्महादेवात्मना समुपासाञ्चक्रे॥ तदनन्तरजातानाञ्च राजतीदं देवपूजास्थानञ्जनकानाम्। अथ चयनार्थं यागभूमिं कर्षति मयि लाङ्गलपद्धत्याः समुत्थिता कापि कन्यका,

---

1. अनव्ययम्।
2. निमेः निमिवंशोद्भवस्य सुकेतोः।
3. निमिपुत्रस्य मिथेरेव देवरात इति नामान्तरम्
4. निक्षेपतयेति न युक्तं निक्षेपस्य शुल्कीकरणायोगात्। रामेण च तद्भङ्गे निक्षेपारक्षणप्रयुक्तदोषभाक्त्वापत्तेश्च जनकस्य। अतो स्वकीयत्वेन ... देवता पूज्यत्वेन यत्रेति न्यास इति व्याख्येयम्।

या क्षेत्रं शोधयताऽऽलम्भि मयेति सीतत्येव भवति विश्रुता । मम चायोनिजेयमात्मजा प्रेम्णा परिवर्धते पोषणादिना । पितरावप्राकृतविग्रहेयं हारिभिः परवशयन्ती रूपौदार्याद्यैरास्त क्रीडासक्ता कदाचित्स्वात्मनैव शैशवे । क्षुद्रैका तदा वराटिका अष्टा धनुरधस्ताच्छरणीकुर्वाणेव विशीर्णतां प्राप । एकस्या अपि नैयून्यं सङ्ख्याज्ञानविरहदशायामपि बत ! बालिशेयमवबुध्यमाना स्वसंविन्मात्रविषयतया, सत्स्वपि वराटिकान्तरेषु क्रीडापूर्तिममन्वाना परितश्च्युतां तां व्यचिचीषतैषा । प्रसार्य दृष्टिं तरलतरलां सर्वतश्चान्ते धनुषोऽधस्तादुपज्ञाय मुदमैदमेयामथाप्युद्धर्तुं पद्धतिमजानाना तूष्णीं भूत्वा क्षणमात्रं कुतूहलिन्युत्क्षिप्य हेलयैव धनुरैशमेतदेकेनैव शयेन विनायासलेशेन यावदादत्त वराटिकां तावदहं सन्नयधां पुरस्ताद्विस्मयमुपागतोऽतिशयितं विस्फारितनेत्रः । देवपूजास्थानभूतमस्प्राक्षमिदं धनुरिति स्वामपराधिनीं स्विन्मन्वीत पितेति तामीषद्वेपमानां तितिक्षां प्रतीक्षमाणामिव लक्ष्यमाणां प्रेम्णालिङ्ग्याहमससान्त्वमत्रासव्याहारैः । नैतदवध्युदजीघटमात्मजाया विषयमेनममानुषम् । मा दृष्टिः पप्तद्दोषायेति । ततश्च निरचैषमेषा नैव भवितुमर्हति भार्या साधारणानां स्वयंवरार्थिनां राजकुमाराणामिति । विशिष्टक्षत्रियमपरिमितपराक्रममस्याः सर्वथार्हत्तममुपज्ञातुमित्थं शुल्कमकरवं धनुर्य इदमधिज्यं विदधीत तस्मै दद्यां कन्यारत्नं मे राजकुमारायेति । तदनु सीताधिगमविषये मिथिलामुपागमन्नृपतयः सहस्रं दिगन्तरेभ्यः । वीर्यशुल्केति श्राविताश्च धनुःसारजिज्ञासवो धनुर्ग्रहणे वापि तोलने नैव शेकुर्लघुविक्रमा इति प्रत्याख्याताः । ततश्चाभिप्रयन्तो वृथा मामवजिज्ञासुं स्वमपरिपश्यन्तः प्रतापविरहं वीर्यशुल्ककरणमसहिष्णवः प्रत्यर्थि भूताः क्रोधात्संहत्य मिथिलामशिथिलबलसन्नाहा न्यरुन्धत सीताप्राप्तौ परस्परस्पर्धिनोऽप्यैकमत्यमेत्य मद्विनिपातकृतेद्रुह्यन्तो नैकप्रकारम् । पूर्तिंमृतीयमान एवैकस्मिन्हायने सैन्यानि दुर्गरक्षणादिसाधनानि च सर्वाण्यकारिषत नामावशेषाणि दुर्मनीषिभिः । ततश्च दुःखितोऽतिमात्रमाराध्य तपसा त्रिदिवेशान्प्रसादितेभ्यश्च प्राप्तस्तेभ्यश्चतुरङ्गबलं धृत्युत्साहसम्भृतः पुनर्युध्यमानः शत्रून्दिक्षुविदिक्षु च क्षुद्रान्व्यद्रावयं पापकर्मणस्तन्द्रोहिणः । मुनिशार्दूल ! धनुरिदं परमभास्वरं भास्करसन्निभयोः प्रदर्शयिष्याम्यनयोरामलक्ष्मणयोः । यद्यस्य धनुषोऽन्धकरिपोरारोपण कुर्यादयं रामः सुतामयोनिजां मे सीतां विदेहेन[1] मया परमप्रेमास्पदतया परिपोषितां भूषिताञ्च गुणैर्विश्राणयेयमित्युक्त्वा विरमन्नपि श्रीमद्दाशरथिदिव्यमङ्गलविग्रहनिरवधिकसौन्दर्यसिन्धुनिमग्नहृदयो रामालाभशङ्कया किमर्थमकार्षं शुल्कमेवमिति शुष्कान्तःकारणस्तत्क्षणमास्त जीवन्मुक्तः सन्नप्यहो ! महाराजो जनकः ॥

## ॥ रामकृतधनुर्भङ्गः, साकेतं प्रति दूतानां प्रेषणञ्च ॥

जनकवचःश्रवणेन प्रमुदितो विश्वामित्रः पार्थिवं धनुर्दर्शय दाशरथय इति यावत्प्रोवाच तावदेव गन्धमाल्यविभूषितं धनुर्दिव्यं यथाजनकाज्ञं पुरतः कृत्वा निर्जग्मुः कर्मसचिवाः, यच्चाष्टचक्रशकटारोपितायां निहितं सन्मञ्जूषायां बृहत्यामुर्वीधराकारं समाकृष्य द्रढिष्ठानि पञ्चसहस्राणि पुरुषाणां प्रयासेन महता पुरःप्रतिष्ठापयाम्ब

---

1. विगतः देहः देहाभिमानो यस्य सः । विदेहस्तेनेत्यर्थः ।

भूवुः । कृताञ्जलिश्च जनकः प्रोवाच विश्वामित्रमुभावप्युद्दिश्य रामलक्ष्मणौ । ब्रह्मन्धनुर्वरमेतदाराधितमीश्वरवदेव पूर्वैरस्माकं जनकैः । पूर्वं सीतार्थिभिश्च पार्थिवैरहो ! महासारमैश्वरमिदं धनुरिति श्लाघितमतिवेलम् । सुरासुरा राक्षसा गन्धर्वयक्षाः सकिन्नरमहोरगाः सर्वे संहत्यापि यदि न शक्ष्यन्त्यस्य नम्रीकरणे मौर्व्यासंयोजने शरेणयोजने मौर्व्याकर्षणे भारपरीक्षाकृते कम्पने च मानुषाणां कः प्रभुः स्यात्प्रपूरणादौ तथाप्येतदेतयोर्महाभाग ! दर्शयेति । जनकेन कथितमुपश्रुत्य विश्वामित्रो वत्स ! [1]पश्येदं धनुरित्यवोचदौचित्यविदामपश्चिमः श्रीरामभद्रम् । मुनि वचनादुपसृप्य चापसमीपं पेटिकाञ्चोद्घाट्य चाक्षुषयन्वृषभध्वजेष्वासनमथाभाषत रघुवृषभः, सप्रश्रय ब्रह्मन्धनुर्व रमिदं पाणिना स्पृशामि । यतेय तोलने पूरणे वेति मनागप्यदर्शयन्सम्भ्रममाविष्कुर्वन्निव वचनलाघवेनैव पूर्णपुरुष भावञ्च धीरोदात्ततामात्मवतामनुत्तम उपात्तबालविग्रहोऽपि । उचितज्ञातायां वर्षिष्ठं वपुषाचार्भकं विदित्वान्तरमेय प्रेमा जनकः कौशिकश्च बाढमित्यन्वमंसाताम् । सपदि परमः पुरुषः पादा[2]ङ्गुलेन कृत्वोन्नतं करेण जग्राहलीलयैव धनुः, यद्विशुद्धबोधस्वरूपः शिवापरा[3]धरूपमैथिलशुल्क करणक्षणमेव धनुष्याराधनपरमसाधने ध्वस्तं शिवसान्निध्यं ध्रुवमित्यवबुध्य ध्वनयञ्शिवभागवताय जनकाय भगवान्रामभद्रः । स्फोरयंश्च पश्यतां नरसहस्राणामुदभाद्वाल भावसुभगोऽपि राघवः पुरुगुरुभारवस्तुनः पादाङ्गुल्या मध्यभागपर्यन्तमुन्नमनं मध्ये गृहीत्वोद्धरणञ्चासाधारण सत्त्वसमुद्रिक्तमहापुरुषधौरेयैकसाध्यं निश्चप्रचमिति । महोन्नतोऽपि स चापः परमाश्चर्यकररघुवरकरसरोरुह गुरुशक्तिप्रभावादेव स्पर्शमात्रादमूद्विनम्रश्च , यतस्सपद्यारोपयन्नाकृष्टवानाकर्णाभ्यर्णमीषत्स्मयमानमुखकमलः सलीलं कौसल्येयः । तत्क्षणञ्च बभञ्ज स धनुरैश्वरविमध्यमीश्वरस्याप्यभिव्यञ्जयन्नात्मनो महेश्वरत्व मनुपचरितम् ।

नित्यंश्रुत्यन्तविश्रान्त[4]दृशः श्रीरामस्य स्वादृष्टवशान्निमेषार्धं लब्ध्वा स्वीयमौर्वीद्वारा श्रुत्यन्संस्तवं क्षीणपुण्यः स्वर्गादिव मर्त्यः पपात भग्नतया चापो बत ! भूरितरामुर्व्यां विरुवन् । शब्दश्च तस्यासीन्महान्नि[5]र्घातसमनिःस्वनः । धरणिधरविदारणोदीर्णधरणीकम्पश्चोदपद्यत तस्मिन्क्षणे । रघुवराभ्यामृते ब्रह्मर्षिराजर्षिभ्याञ्च मनुष्या निपेतुरशेषा मूर्च्छामृच्छन्तः साकमितरैः प्राणभृद्भिः । तदनु प्रत्याश्वस्ते च शनैर्जने समस्ते रामजामातृताप्रापकं चापसमारोपणं हन्त ! कथं सेत्स्यतीति प्राप्तपूर्वो भीतिं, ध्वस्तसाध्वसोऽधुना वसुधाधिपः प्राञ्जलिर्निजगाद जनको मुनिपुङ्गवं हृदय[6]ङ्गमम् ।

---

1. केचिद्वाल्मीकीये "पश्य इति" सन्धिं भङ्क्त्वा, धनुर्भङ्गायानुमतिमदात्कौशिक इत्याहुस्तदसदस्य वाल्मीकि वचनत्वात् ।
2. तदुक्तं पाद्मे "रामोऽपि तद्धनुष्कोटिं स्पृष्ट्वा पादाङ्गुलात्ततः । उन्नतञ्चापमारोप्य बभञ्ज मोहिता जनाः" ॥
3. पूर्वमहत्तरैः शिवत्वेनाराधितं सामान्योपकरणं मत्वा शुल्कीकरणमन्याय्यमधिकाराभावश्च ।
4. उपनिषत्प्रतिपादितज्ञानरूपस्य, कर्णान्तविश्रान्तनेत्रस्य च ॥
5. "वायुनाभिहतो वायुर्गगनात्पतति क्षितौ । यदा दीप्तः खगरुतः स निर्घातोऽतिदोषकृत् ॥" इति ज्योतिः शास्त्रम् ॥
6. इदं क्रियाविशेषणम् ॥

भगवन्नद्भुतरसनिर्झरः कूलमुद्रुजः कोऽपि पुलकयति मां, स्थालीपुलाकन्यायाददीदृशदीश्वरशरासने शौर्य वारिराशिरुर्वीश्वरकुमारोऽयं यतः स्वदोर्विक्रमसारैकदेशमादेशमनुरुन्धन्भवतः । तदेतदचिन्त्यं समयमदर्शनादियद्वय [1]समसम्भावनीयत्वादतर्कितञ्च धनुरारोपणेऽनुभूतं हस्तलाघवं कौतुकमुत्पादयदर्भकरघुवृषभस्य प्रेरयति मां किञ्चिदिव ब्रह्मर्षे ! विज्ञापयितुम् । "अनन्तं बत ! मे वित्तं यस्य मे नास्ति किञ्चन । मिथिलायां प्रदीतायां न मे किञ्चित्प्रदह्यते ॥ इति विश्रुतयशसां वंशस्य जनकानाञ्जनयिष्यतीयं जाता मे सीता जन्मतःसिद्धनिरतिशयशुद्धिसम्पन्ना कीर्तिमति महतीम् । यतः प्राप्स्यति चक्रवर्तिकुमारत्वान्निरवधिकैश्वर्येण भरणक्षमतया कन्यामात्रभिमतं भर्तारमनुपमरूप ह्रेपितकन्दर्पतया रमणाधिकरणत्वेन स्वानुरागभूमास्पदं रामं माहाकुलदशरथात्मजत्वान्मम सबान्धवस्य सौहित्य विधायकं भवच्छिष्यतया च सर्वसाधुजनसम्प्रतिपन्नमेनमिक्ष्वाकुकुललक्ष्मीरजलधिकौस्तुभम् । जाता च मे प्रतिज्ञा सत्या । निरणैषं प्राणेभ्योऽपि बहुमन्तव्या मे सीता देया रामाय गुणैरभिरामायेति । ब्रह्मर्षे प्राप्य भवदनुमति ममात्या मे प्रयान्त्वयोध्यां सत्वरमानेतुं दशरथं महारथम् ।

महर्षिगुप्तयोर्निवेद्य स्वस्तिमात्मजयोर्व्याहरन्तु वीर्यशुल्कायाः प्रदानञ्च कन्याया इति । विश्वामित्रश्च जनकं महाराज ! मणीकनकयोर्जगति कस्य न स्यात्प्रिया सङ्गतिः । शिवधनुर्भङ्गोऽपि शिवेच्छया शिवायैव जातः । शक्तिर्हि नित्यसम्बद्धा शिवेनेति तयोर्योजनमेव कथ, कथंकारं वाचीकारोऽस्मादृशाम् । तथाप्यस्तु सर्वं सांव्यवहारिकं यथाभवदिच्छं शुभेच्छोस्ते भूयाद्भद्रमित्यवोचत । जनकोऽपि जवान्वितान्प्रेषयामास द्रुतं प्रत्ययोध्यां दूतान्वितीर्ण कल्याणसन्देशपत्रिकान् ।

## ॥ दशरथस्य सह वासिष्ठादिभिर्मिथिलां प्रति प्रस्थानम् ॥

जनकनिदेशात्प्रस्थिताश्च दूताःक्लान्तवाहना मा भूमेति त्रिरात्रमुषित्वा मध्येमार्गं प्राविशन्पुरीमयोध्याम् । प्रवेशिताश्च दूता राजवेश्म पश्यन्तस्त्रिदिवेश्वरसममसमसाम्राज्यश्रीसमृद्धं वृद्धमप्यप्रधृष्यमव्याजसौजन्यजन्म भूमितया सम्यगभिगम्यमुपगम्य सप्रश्रयं बद्धाञ्जलिपुटाः प्रयता निर्भयं विज्ञापयाम्बभूवुर्मधुराक्षरम् । प्रभो ! मिथिलेश्वरोऽस्माकं राजा महाराज ! जनकस्त्वामापृच्छते योगक्षेमे पुरस्कृताग्निहोत्रं सोपाध्यायपुरोहितप्रभृतिञ्च । कौशिकानुमतश्च व्याहरति "कन्या मे वीर्यशुल्केति मन्ये विदितैव भवतां मम प्रतिज्ञेति । राजानश्च निर्वीर्यतया धनुरारोपणासमर्थाः प्रतियाताः प्राप्तवैमुख्या इत्यपि भवति भुवनविदितम् । सेयं सर्वप्रार्थनीया रूपधैर्यौदार्यादि शेवधितया ममार्हतोऽभ्यर्ह्यस्य भवतः सम्बन्धं सुता नाम्ना सीता निर्जिता यदृच्छया मिथिलामृच्छता कुमारेण ते रामेण पुरस्कृत्य भगवन्तं विश्वामित्रम् । येन विक्रमैकनिकेतनेन महात्मना भग्नं मध्ये धनुर्महत्यां जनसंसदि माहेश्वरम् । अतो यथाप्रतिज्ञं प्रयच्छाम्यच्छयशसे रामाय मे सीतामनुज्ञातुमर्हसि मनीषिमान्यः । सोपाध्याय

---

1. वत्वन्तात्स्वार्थेद्वयसच् ।

पुरोहितस्त्वरितमुपेत्य सपरिवारमीक्षितुमैक्ष्वाक ! राघवौ, माञ्च प्रणयिनं प्रीणयितु, फलेग्रहिमाशिषां माङ्गलिकानां विधातुञ्चार्हसि स्तोमं वधूवरयोः कृते परिषदि महर्षीणामि"ति शतानन्देनाभिनन्दितः ।

प्रहर्षितः साकं वसिष्ठवामदेवप्रभृतिभिर्मन्त्रिभिश्च साधु साध्विति प्रशंसद्भिः सम्बन्धं पङ्क्तिरथः प्रस्थाय पुष्कलधनैर्धनाध्यक्षैः साध्यक्षैश्च चतुरङ्गबलैः शिबिकान्दोलिकाध्यारूढवसिष्ठप्रमुखैर्महात्मभिर्मुनिभिः सावरोध मध्यासितस्यन्दनश्चतुरहमध्वानं गत्वाह्न्यभ्युपेयिवान्पञ्चमे राजपञ्चास्यः श्रीमतो विदेहान् । श्रुत्वा दशरथमागतं प्रत्युद्व्रज्य जनकः शतानन्दाद्यैर्ज्ञानशीलवयोवृद्धं प्रपूज्य यथाविधि विवाहःशीघ्रभावीत्यन्तः प्रहृष्यन्व्याजहार स्वागतमात्मवतामुत्तमः ।

चक्रवर्तिन्पुत्रयोस्त्वमुपश्रुत्य कीर्तिं स्ववीर्योद्रेकजनितां प्राप्स्यसि प्रमोदम् । दिष्ट्या प्राप्तोऽयं भगवान्वसिष्ठः सदार इतरैश्च द्विजश्रेष्ठैः शतक्रतुरिव क्रतुभुग्भिः । दिष्ट्या विध्वंसितः कन्याप्रदानप्रतिबन्धकप्रत्यूहव्यूहः कुलञ्च मे पूजितमभूदनाविलम् । वीर्यश्रेष्ठैरघटिष्ट दिष्ट्याऽयमभिसम्बन्धो राघवैर्मम कृतसुकृतानां वंश्यस्य जनकानाम् । नरेन्द्रप्रभो ! श्वः प्रभाते यथासम्प्रदायं निर्वर्तयितुमर्हसि महतां सन्निधौ यतः पृथ्वीपते ! त्रिचतुरदिनानन्तरभाविनि यज्ञस्यान्ते सति, तन्मध्ये महर्षिसम्मतो विवाहो ब्राह्मः । साकेतनाथः श्रुत्वा मैथिलस्याभ्यर्थनां प्रत्यब्रवीत्सचमत्कारं, क्षत्रियतया न जाने प्रतिग्रहधर्मं, परन्तु श्रुतं दातृवशएवेति । कन्यागवादीनां भविष्यति प्रतिग्रहोऽपि साम्प्रतमिदम्प्रथमतयेति, यथा वक्ष्यसि करिष्यामहे तथैव वयमिह भवन्मते स्थिता इति । कन्याया वीर्यशुल्कनिर्जितत्वेनात्र मदनुमत्यनपेक्षायाञ्च नीतिमत्यां हन्त ! विनयः कियाञ्श्रुतिमधुरं व्याहरतोऽस्य ज्ञानवृद्धस्य चक्रवर्तिन इति विसिष्मिये भृशं मिथिलेश्वरः । ततो महर्षिगणाः परस्परसमागमसमुद्भूतमाविष्कुर्वन्तः प्रहर्षं निशां तामवसन्सुखम् । रामोऽप्यथ महामतिः ससौमित्रिरुपस्पृशन्पितुः पादौ विश्वामित्रमयासीत्पुरस्कृत्य । निशाम्य[1] च पुत्रौ विशाम्पतिरसौ रामलक्ष्मणौ प्रहृष्यन्निशां सुखमवात्सीदभिपूजितो जनकमहाराजेन ।

धर्मतत्त्वविन्मिथिलानाथोऽपि निर्वर्त्य यज्ञावशिष्टक्रियां कृत्वा चाङ्कुरार्पणादिकं पुत्र्योरात्रिमुवास सुखितान्तरात्मा । अथ विदेहः कृतप्राभातिककृत्यजात उपजातकुतुको जनकः शतानन्दं पुरोहितमवादीदध्यिवसति हि पुरीं पुष्पकविमानसध्रीचीनां साङ्काश्यां, पिबश्च सरसं वारि वार्यामलकपर्यन्ताया नद्या इक्षुमत्या यवीयान्धार्मिकश्च भ्राता मे भ्राजमानः कुशध्वजः । स हि भवति साङ्काश्यस्थित एव गोप्ता यज्ञस्य सामग्रीप्रेषणादिभिरप्रमाद्यन् । तमहं वाञ्छामि द्रष्टुं विवाहमहोत्सवसमुद्भवां प्रीतिं मया सह सोऽप्यनुभवतादिति, दशरथादिश्चात्र पथमपि प्रथेयमनुजन्मनः प्राप्नोत्वित्यभिसन्धाय ज्ञातचरमप्यपूर्वमिवोपदिशन् । आनीतश्च यथादेशं कुशध्वजः शतानन्दमभिवाद्य जनकञ्च सभाजितोऽभजत राजार्हमासनं दिव्यं पुरोहितराजानुज्ञातः । भ्रातरौ च प्रेषयामासतु स्तेजस्विनौ मन्त्रिश्रेष्ठं सुदामनं मन्त्रिपते ! गत्वा शिबिरनिवेशं शीघ्रमैक्ष्वाकमानयस्व लक्ष्मीवन्तं सहात्मजैर्मन्त्रिपरिवृतमिति ।

---

1. दृष्ट्वा । शमोदर्शन इति मित्वनिषेधान्न ह्रस्वः ।

समानीतः सभाजितश्च सभाजितः पङ्क्तिरथः सोपाध्यायः सबान्धवः सोऽयमब्रवीद्वैदेहमाह्लादयन्वाग्मिनामग्रिमः । महाराज ! व्याहरिष्यत्ययं भगवानृपिरिक्ष्वाकुकुलदैवतं वसिष्ठः प्राप्याभ्यनुज्ञां गाधिनन्दनस्य सह सर्वैर्महर्षिभिर्दं "शपुरुषविख्यातादि" ति शास्त्रमनुरुन्धन्नरुन्धतीपतिर्मम यौनसम्बन्धनियतापेक्षितां वंशविशुद्धिं धर्मात्मा यथाक्रममिति । भगवानप्यारभ्य स्वभुवमव्यक्तप्रभवं पुरोहितो वसिष्ठः स्पष्टमचष्ट प्रातिस्विकरूपेण पार्थिवान्सोमवंश्यापेक्षया प्रशस्तवंशतया विशुद्धान्सूर्यवंशमुक्ताफलकल्पानशेषान्विशेषतश्च सगरं यशसाप्रवरमाश्रीरामलक्ष्मणाढ्यां लक्ष्मीवद्भ्याम् ।

न्यगमयच्चादित आरभ्य वंशविशुद्धानामिक्ष्वाकुलसमुद्भवानां वीराणामकीर्तयं कीर्तिमतां राज्ञां परम्परां, राजन्रामलक्ष्मणयोः कृते त्वत्सुते अहं वरये,[1] सदृशाभ्यां वितरीतुमर्हसि सदृश्यौ ते पुत्र्यौ धर्मविदिति । अथ मिथिलाधिपः कन्यापितृत्वाज्जामातृवर्गे सन्निहिते प्रसुताया अनौचित्येन स्ववंशविशुद्धिं ज्ञापयितुं स्वयमेव विहिताञ्जलिरुपक्रममाणो निमिमारभ्य नृपतिं कमप्यविहाय स्वसादाच कुशध्वजाद्राज्ञः समगिरत सर्वान् । तदनु धर्मज्ञः पिता मम ह्रस्वरोमा राज्ये मामभिषिच्य ज्येष्ठं कुशध्वजञ्च यथि समावेश्य भरणीयमरण्यं गतः । वृद्धे च मे स्वर्याते पितरि धर्मेण धुरमावहं देवसङ्काशश्च कुशध्वजं स्नेहात्परिपश्यन् । काले च याते कतिपये साङ्काश्याधिपतिर्नाम्ना सुधन्वा वीर्यवानवारुन्ध मिथिलां सह बलैः शैवं धनुरनुत्तमं सीता च कन्यारत्नं मह्यमर्प्यैतामिति । तयोरप्रदाता मया योद्धुं प्रवृत्तः सुधन्वा हतः सङ्गरे । सपदि साङ्काश्याधिपतित्वेन मयाभिषिक्तः सोऽयं कुशध्वजः । इति । वीर्यशुल्कां मे सुतां सुरसुतोपमां रामाय, लक्ष्मणाय चोर्मिलामूर्मिलायमानलावण्यसलिलां तनयां मे द्वितीयां त्रिर्ददामीति वदामि त्रिकरणशुद्धः । राजन्विवाहपूर्वसमयनियतं कुरु कर्म [2]गोदानाख्यं, वैवाहिकं पितृकार्यं नान्दीश्राद्धञ्च । अद्य तत्र मिथिलाप्रवेशात्तृतीयदिवसे मघा नक्षत्रं श्वः फल्गुन्याख्याके विवाहमुत्तरनक्षत्रे राजन्कुरुष्व । तदर्थं रामलक्ष्मणयोः कृते सुखोदर्कं गोभूतिलहिरण्यादिदानञ्च समाचर समाहितः कन्यार्थमहमिवेति च व्यजिज्ञिपत् । सन्दर्भे च तस्मिन्प्रत्युत्पन्नमतीनामनुत्तमः प्रोवाच कुशिकात्मजः स कुशध्वजं जनकं धर्मज्ञ । कुशध्वजस्य भ्रातुरस्य ते यवीयसः सुताद्वितयमनुपमरूपं यत्तदपि वरयामो वयं राजन्भरतशत्रुघ्नयोः कृते पुरस्कृत्य वसिष्ठम् । जनकश्च मुनिपुङ्गवौ ! यदाज्ञापयथः स्वयं युवां कुलसम्बन्धं सदृशं तन्मन्ये कुलं धन्यं न इति । एवं भवतु भद्रं वः । कुशध्वजसुते इमे भरतशत्रुघ्नावुभौ भजेतां पत्न्याविति । एकाह्ना चतसृणाञ्च राजपुत्रीणां पाणीन्गृह्णन्तु चत्वारोऽपि राजपुत्राः । मुनिपुङ्गवौ ! दशरथजनककुशध्वजानां त्रीण्यपि राज्यान्यस्माकं भवन्तौ परिपालयेताम् । यथा दशरथस्यैषा मिथिला तथायोध्यापि मम । प्रभुत्वे युवयोर्नास्ति सन्देहः । युवामर्हथः कर्तुं यथार्हमिति । दशरथश्च प्रशंसन्मिथिलेश्वरौ मुनीन्द्रौ च पुरस्कृत्य स्ववेश्मगतः श्राद्धं कृत्वा विधानतः प्रभात उत्थाय गोदानमनुत्तमञ्चक्रे । ब्राह्मणेभ्यः शतसहस्राणि गवामेकैकशः पुत्रानुदिश्य दिदेश दशरथो धर्मतः । सुवर्णशृङ्गाः क्षीरसम्पन्नाः स वत्साः कांस्यमयदोहनपात्राश्चतुःशतसहस्रसङ्ख्याकाश्च पयस्विनीर्मनस्विनामग्रणीर्वित्तमन्यच्च

---

1. कन्यावरणस्य पुरोहितकृत्यत्वात् ।
2. गोः केशाः दोः पादमूलरोमाणि च यत्र खण्डयन्ते तदेतद्गोदानं नाम समावर्तनाख्यं कर्मेत्याहुः ॥

सुबहु पुत्रवत्सलः प्रविततार पुत्राणामुद्दिश्य गोदानं द्विजेभ्योऽसौ रघुनन्दनः । एवं निर्वर्तितगोदानादिविधिर्विधि रिव लोकपालैरावृतः पुत्रैश्चतुर्भिरदेदीप्यत ।

यस्मिंश्च दिवसे गोदानमकुरुत नरपतिस्तस्मिन्नेव युधाजित्समुपेयाय केकयराजात्मजः साक्षाद्भरतमातुलः । स च राजानं पृष्ट्वा कुशलमब्रूत मम पिता स्नेहात्कुशलमाह स्म । स्वस्त्रीयं द्रष्टुकामः प्रयातोऽयोध्यां विवाहार्थ मागतान्मिथिलामुपश्रुत्यात्मजांस्तत्र त्वरयाभ्युपगतोऽहं स्वसुः सुतं द्रष्टुकामः सहभ्रातृभिरिति । राजा दशरथः प्रियातिथिमुपस्थितं पूजनार्हमपूजयत् । ततस्तामुषित्वा रात्रिं प्रभातप्राप्तप्रबोधः कर्मवित्कृत्वा च कर्माणि पुरस्कृत्य महर्षीन्यज्ञवाटमुपागमत्सह पुत्रैर्महात्मभिः ।

## ॥ सखीभिराभरणैर्जानक्या अलङ्करणम् ॥

शतानन्दस्य निदेशेन नन्दनीयेन विलासिन्यो वयस्या अहमहमिकया जनकराजनन्दिनीमलङ्कर्तुमनर्घवस्त्रा भरणैरथ [1]स्नपयां बभूवुः परिमळभरिताभिरद्भिः सुखस्पर्शाभिः अलङ्करणकर्मणि प्रेम्णा व्याप्रियमाणाः करतल कलितरत्नाभरणा वरवर्णिन्यो भणननिपुणिम्ना मैथिल्या रामणीयकमुपवर्णयामासुरसाधारणम् । वैदेहि ! विवाहस्ते समुपस्थितः पूर्वमुद्भूय दुग्धाब्धेर्यं स्वयमभ्येत्य पुरुषोत्तममवृणीथाः स एवैष बत ! गवेषयस्त्वामुपस्थितीकृतश्च विश्वा मित्रेण प्रदर्श्य निजदोर्वीर्यं सज्जो भ्राजते वरीतुमनघः श्रीरघुपरिवृढविग्रहेण । इन्दिन्दिरसन्दोहसन्देहसन्दायिनि रुचिरचिकुरप्रकरमहान्धकारे रदेभ्य इव कातर्यात्कुन्दसुन्दरेभ्यः किं स्विन्निलीयते फुल्लमल्लिकामालिकेयं मैथिलि ! समुल्लसन्ती । तप्ततपनीयमयं कमनीयं विपुलं फालफलकं ते विशालाक्षि ! किमध्यास्य सौभाग्यलक्ष्मीरुपवेशेन विश्राम्यति हन्त ! प्रतिप्रतीकं निरन्तरनिर्वर्तितस्वैरनर्तननैकवैखरीभिः क्लान्तात्यन्ताय प्रकृत्यालं कान्तापि । लम्बमानरोलम्बश्रेणीरमणीयललितकुटिलकुन्दलश्रीविलासस्फुरणमनणुमनोहरणं पूर्णमपि ममैवैकस्य सर्वस्वं फालस्य विशालस्य मा भागवद्भूदितरदङ्गमेकमपि यदि निर्नीत्यभिमन्यते मामकमिति निहन्यामिति भीषयितुं योषिन्मणे ! मारकती द्योतते किं स्विदसिवल्ली कापि कस्तूरिकातिलकोर्ध्वलेखाच्छलेन । सरारिधनुर्भङ्गं कृतवतो भङ्गं कलयितुमनलं[2]मभिमत्यैकमात्मना द्विधाभवन्निन्ये किन्नु प्रद्युम्नधनुर्वरं सुभ्रूर्विनम्रभ्रूवल्लिद्वितयकैतवेन जयिनि ! ते सुतनो रतेर्मीनकेतनस्य । नीलनीरजश्रीदगान्ता हि प्रेमार्द्रिताः श्रुतिपथानुगमनकमनीयाः प्रत्यग्रमुदिरमेदुरे व्यतिक्रम्य स्वैरमनुरागोद्रेकाद्ध्रुवरशरीरे शरदिन्दुसुन्दरमुखि ! कन्दलयन्त्यमन्दं सुरुचिरान्रोचिःप्ररोहान् । मदवद्द्विरदरदखण्डसप्रभसुभगगण्डपालिप्रभानिर्झरे निकामनिम्ने निमग्नं युग्मं सद्योदलितदाडिमफलबीजराजिस श्रीकसद्रत्नताटङ्कयोरप्ययं मा गमदिति कृपया समुद्धर्तुं सन्नद्धतः सन्नताङ्गि ! सीते ! ते श्रुती यत्नपन्न ज्ञापयितु

---

1. अथस्नपयां बभूवुर्मङ्गलस्नानं कारयामासुः ।
2. अनलमपर्याप्तम् ।

मिवान्तिक " मम्ब ! नैसर्गिकमानोज्ञकानि तवालङ्कर्तुमङ्गकानि प्रावर्तिष्महि ह्रिया विहीनानि क्षम्यतामयमपराध " इत्याभरणेभ्यः प्रतिनिधीभवदुद्यत्कौतुकम् ॥

नितम्बिनि ! पिबन्बिम्बफलमधरयितुमतिधीरमधरमधरीकृतामृतरसमधीरलोचने ! मूल्यानर्हतयाधरयन्धरामपि न गणयिष्यति रामभद्रः कुन्दकुट्मलकोमलदन्तपङ्क्तिसमुद्यन्मन्दहासविशदकौमुद्या चकोरभावमुपगमितश्चन्द्रमुखि ! चक्रवर्तिकुमारः। प्रालेयकबलितकलधौतशैलसलक्ष्मीकं क्षौमसञ्छन्नकूलङ्कषवक्षोजयुग्ममुत्पश्यन्नौत्सुक्येन किमप्यस्वास्थ्यमेति पञ्चशरपरवशतया रघुवरः कलकण्ठि ! ते कम्बुकण्ठसमाश्लेषसमुन्मिषदुत्कण्ठः मञ्जुभाषिणि ! वीणाङ्कर्तुं ह्रीणां निपुणाभिर्मधुमयीभिर्भणितिभिः प्रीणयिष्यसि प्रेयांसं प्राणेभ्योऽपि गरीयसीत्वेन[1] परिगण्यमाना गुणगणगरिम्णा च रामभद्रम्। मध्यममादायावधिं गभीरं ते नाभिं पौर्वापर्यजुषां यौवनेन पुष्पितप्रायाणां कृतेतेऽङ्गकानां तुलया विमाय लावण्यद्रविणं विश्राणयदपि विना वैषम्येन हन्त ! माध्यस्थ्यादधिरोपयेयुरनृजुधियो मध्यनघे पक्षपातमित्यालोच्य सुलोचने ! किं खिददुद्रुवत्कातर्यतस्त्वदुदरम्। मनसिजमहाराजजातरूपविजयस्तम्भः प्रभावति ! रम्भापरीभावैकसंरम्भस्त्वदूरुस्तम्भः श्रीमान्वेल्लन्मृदुदुलकूलपेशल : प्राप्स्यत्यालानतां बन्धुं कौसल्येयस्य.बन्धुरस्य गन्धसिन्धुरस्य। वल्लकीकलशाद्विशालतायाः पुलिनान्मृदुलतायाः कुम्भिकुम्भपीठात्कठिनतायाः रथाङ्गाद्वर्तुलतायाश्च कलहंसविलासगमने ! युगपच्चोरयितुस्तेऽनणुकणन्मणिमेखलयालमवलिप्तस्य नितम्बस्य नियतं विधास्यति दण्डमुचितं कोदण्डपाणिरपरोऽयं पञ्चबाणः। पार्णि गृह्णन्नप्यधुना नचिराद्रूहीष्यन्सुषमां प्रणयापराधे काममपि परिपुष्णन्कोटीरमाणिक्यमणिप्रभापुञ्जपिञ्जरिते, मञ्जुमञ्जीरशिञ्जितव्याजेन गिरा स्वैरमङ्गीकारं विदधती प्रसादयिष्यति चरणारुणपङ्केरुहे ते पङ्केरुहाक्ष्यनुनयैरघुनायकोऽयममेयैरसंशयमिति। तदानीं माता साकमुपमातरः प्रीत्या ननन्दुरमन्दमहो ! विस्मापयतेऽस्मान्वयस्यानामियं सरससरसा वाग्वैखरी परीहासशीलानामपि यथार्थमभिदधानानाम्। यदन्ययोषागुणविद्वेषिण्य एव प्रायो योषित इति। शातानन्देन पुरोहितेन त्वरामावेदितवत्यः सख्यः परिसमापयामासुः प्रसादनविधिं सीतायाः प्रकृतिसौभाग्यभूम्ना रत्नाभरणानि स्वयमलङ्कृतवत्याः।

## ॥ श्रीवैदेहीविवाहमहोत्सवः ॥

विजयावहेऽथ काकुत्स्थः सह समग्राभरणभूषितैर्भ्राजमानो भ्रातृभिः विवाहानुरूपे मुहूर्ते कृतविवाहसूत्रबन्धनमङ्गळाचारः पुरस्कृत्य महर्षिभिः सह वसिष्ठं तस्थौ पितुरन्तिकमुपाश्रितः। भगवानेत्य वसिष्ठो जनकञ्जगाद राजन्राजा कौसल्याजानिः साकमात्मजैः कृतकौतुकमङ्गलैरभिकाङ्क्षन्वर्तते दातारम्। योगे हि दातृप्रतिग्रहीतृभ्यां दानप्रतिग्रहाद्यात्मानः प्रभवन्ति धर्मा, अतः प्रतिपद्यस्व प्रतिज्ञारूपं स्वधर्ममिति। जनकः स स्मयमानः प्राह

---

1. तद्धितान्तत्वादगुणवचनत्वमिति न पुंवद्भावः।

प्रतिहारः कस्तिष्ठति द्वारि द्रुतं रोद्धुमागमनं, कस्य वा मम संप्रतीक्ष्यते ब्रह्मन्नाज्ञा स्वगृहे को विचारोऽस्ति यतो राज्यमेतद्भवतामेव । अनुष्ठितविवाहसमुपयोगिसमग्रमङ्गळाचारमनोहराश्च चारुवेषेण योषाभिर्देदीप्यमाना विद्युल्लता इव वेदिमूलमुपागता एव मे कन्याः कनत्कनकसश्रीकदिव्यदेहा विदेहस्य । सज्जस्त्वत्प्रतीक्षोऽहमस्मि वेद्यां प्रतिष्ठितः सकनिष्ठः । किमर्थं विलम्बते पार्थिवः कुरुतामविघ्नं सर्वमिति । दशरथोऽथ प्रीतः सुतरां प्रावी विशत्सुतान्सर्वानपि पुरस्कृत्य मुनीन् । महातेजा विश्वामित्रश्च जनकस्य हस्तं वसिष्ठश्च गृहीत्वा कुशध्वजस्य प्राविशतां सहान्तेवसतां समुदयैर्महर्षिसम्राजौ । तदनु साकेतनाथः स्त्रीभिः प्रविवेश महाद्युतिः परिवृतः । राजानं वसिष्ठं विश्वामित्रञ्च वस्त्राभरणैर्गन्धमाल्याद्यैः साक्षतैर्जनकः पूजयामास धर्मविदनुपदमुपागतांश्च यथाविधि यथा यथञ्च पार्थिवान् । ततश्च सप्रश्रयं प्रार्थयामास मिथिलेश्वरो वसिष्ठमृषीश्वर! कारयस्व लोकाभिरामस्य भगवन्नामस्य सर्वां क्रियां वैवाहिकीमृषिभिरेभिः सुधर्मायमानां तन्वद्भिरिमां परिषदमिह धर्मविदां वर! सन्नद्धमस्ति समस्तं, नाविदितमस्ति किञ्चन सर्वज्ञस्य भवतः, कर्तुमर्हस्यशेषं ब्रह्मर्षे! भगवन्निति । प्रपायाः फलभरविनम्राभिनवरम्भा स्तम्भप्रत्यग्रपूगवरनारिकेलफलरसालपल्लवपरिष्कृतायाः मध्ये मङ्गलरङ्गवल्ल्यादिभिर्मण्डितमधिष्ठाय मणिमण्टपं वसिष्ठः कृत्वा वेदिं विधिवन्महातपा गन्धपुष्पाद्यैरलञ्चकार्षीत्समन्ततः साङ्कुराभिः सुवर्णपालिकाभिः करकैः शङ्खपात्रैः स्रुवैः स्रुग्भिरर्घ्यतीर्थप्रपूरितैश्च पात्रैर्लाजपूर्णैश्च भाजनैः कार्यान्तरोपयोगिनीभिः पात्रीभिरक्षतैरभिसंस्कृतैश्च परिष्कुर्व न्दर्भैः समपरिमाणैः । समास्तीर्य विधिवन्मन्त्रपूर्वकं वह्निमाधाय जुहवाञ्चक्रे भगवानृषिः श्रद्धधानोऽत्यन्तमव हितश्च । निर्वृत्ते चाभ्युदयिके पाणिग्रहणात्पूर्वमवश्यकर्तव्ये होमे सर्वाभरणभूषितां विद्युत्प्रभां विशालाक्षीं स्निग्धकुञ्चितमूर्धजां हंसाङ्कितेन दुकूलेन संवृतां किञ्चित्पीतेन, वासितेन सुसंवृतां सुरक्तेन चोत्तरीयेण सीतां समानीय पुण्डरीकाक्षवक्षःस्थलस्खलितामिव लक्ष्मीं लक्ष्यमाणां साक्षिणोऽग्नेः समक्षं राघवस्याभिमुखञ्च स्थापयित्वा मिथिलेश्वरः कौसल्यानन्दवर्धनं व्याजहार श्रीराघवं अमन्दसौन्दर्येणानिर्वर्ण्यलावण्येनामेयेन सौकुमार्येण च कालत्रयेऽपि स्त्रीजातिमतिशयितवतीयमप्राकृतदिव्यमङ्गलविग्रहा सकलसौभाग्यैकाधिष्ठानदेवता वाणीरमोमा अपि निरुपमरूपसम्पदा ह्रेपयन्ती विशिष्टाचायोनिजत्वाभिजात्यौदार्यादिभिः स्फुरति पुरस्तात्ते सीता कापि विद्युल्लेखेव । सिद्धाश्रमवासिभ्यः श्रुत्वेमामजस्रभावनया भावितवांस्त्वं चाक्षुषयन्निर्णय नैषावाङ्मनसविषयतयार्हति भावनामिति । यथालाङ्गलपद्धतिर्भवति भुवनस्य जनयित्री समुद्यमिनो व्यापारेण कर्षकस्य सस्यसम्पत्समृद्धिमुत्पाद्य तथैव लोक क्षेमार्थं यष्टुं चयनार्थं कृष्टवतो मे लब्धा [1]सीतातः सीतैषातः सर्वलोकमाता त्वामर्हति वरीतुं, यदहं नाम्नैव जनकस्त्वं तु सर्वलोकजनको निरुपचरितः । देहेऽप्यभिमानराहित्याद्विदेह इत्यन्वर्थनामानमपि मां मोहयित्वा कल्याणगुणै ममाभिमानभाजमातनोति जानकीयं वस्तुतोऽममस्य सुतापि मम जनकस्य ।

त्वदाचरणार्हधर्माणां नित्यसन्निहिता प्रोत्साहयित्री च । धर्मो हि भवति देशकालाधिकारिभेदभिन्नः । आधिव्याधिभ्यामर्द्यमाने पत्यौ सत्या दिव्योपदेशकभिषग्भावो धर्मः पोषणे मातृभावः केल्यामालिभावस्त्रेताग्न्यु पास्त्यां पत्नीभावः क्षत्रियभावः सङ्गरे शिष्यभावोऽतिथिसत्कारादावासभावो विपदि जगत्क्षेमङ्करणे सुहृद्भावः

---

1. लाङ्गलपद्धतेः

समालोचविधौ सचिवभाव इत्यादिरूपेण। सर्वत्र सतीयमनुकूला सती भवति ते सहधर्मचारिणी। अतःकाकुत्स्थ! पाणिना पाणिमस्या गृहाण। येन चक्षुः साफल्यं भजेयं भद्रं ते भूयाद्युवयोः पाणिग्रहणेन मा भूद्दृष्टिदोष इति कुर्वन्नहं प्रशासनम्। तव भुजवीर्यनिर्जिता श्रीरिवोर्जिता राजते सीतेति जानीहि मा भूद्विलम्ब इत्यादि ध्वनयन्बह्वर्थजातम्। प्रीत्यतिशयवशात्पुनरनुशास्ति स्म श्रीराम! पतिव्रता भवत्यतो महाभागा। किञ्च त्वा मृतेऽमहा निरुत्सवा भवत्यभागा च स्वं त्यजन्ती भागं सर्वस्मिन्नपि विषये न्यायप्राप्तम्। अपि च पतिव्रता अमहाभागाः सर्वा यस्याः सेयं भवति पतिव्रतामहाभागा यदेतामपेक्ष्यातीतानागतवर्तमानाः सर्वा अप्यमहाभागा एव सत्य इति। छायाया यथा पार्थक्येन किमपि नास्त्यनुवर्तनादृते तथैव विद्धि त्वमनुगताया अस्या अपीति। व्याहरन्नेवं प्राक्षिपद्राजा राघवहस्ते जलं मन्त्रपूतं जनकः। तस्मिंश्च समये साधु साध्विति प्रशंसतामृषीणां देवानाञ्च महानभूत्पुष्पवर्षः साकं देवदुन्दुभिनिर्घोषैर्यथागन्धर्वगानमनुगायदप्सरःसङ्घनर्तनप्रभेदैश्च हृदयङ्गमैः। इत्थं मन्त्रोदकपुरस्कृतां दत्वा राघवाय सीतां, स्वामौरसपुत्रीमनयैव पद्धत्या ग्राहयामास लक्ष्मणं तथैव भरतं माण्डवीं शत्रुघ्नं च श्रुतकीर्तिं ये पुत्र्यौ कुशध्वजस्य। एवं जनकराजगिरा चत्वारश्चतसृणां गृह्णन्तः पाणीन्पाणिभिर्भगवतो मते स्थिता वसिष्ठस्य प्रदक्षिणीकृत्य हविर्भुजं वेदिकां राजानमृषींश्च सभार्याश्चक्रुर्विवाहहोमानमोघाशिषां भाजनीभूय द्विजन्मनां राजात्मजाः। तूर्योद्घुष्टनिनादिते महति च महोत्सवे स्वस्वाग्निं त्रिःपरिक्रम्य विवाहं निर्वर्तयांबभूवुः शुभसौभ्रात्रभ्राजमानमहाभ्युदयाः साकेतनाथस्य सर्वस्वभूताः पुत्राश्चत्वारः पुमर्था इव मूर्त्या परिस्फुरन्तः। अथोपकार्यामगुः स्वगृहिणीभिस्सह पित्रा सर्वे दशरथेनान्वीयमानाः सबान्धवैः ऋषिसङ्घैः। रात्रावथ व्यतीतायां विश्वामित्रः कृतकृत्यतया प्रमुदितोऽत्यन्तमापृच्छ्य तौ सुराजानौ नगामोत्तरपर्वतम्। तदनु मिथिलेश्वरः शतसहस्राणि गवां सहक्षौमरत्नकम्बलकोटिभिर्हस्त्यश्वरथपदातिहिरण्यमुक्ताविद्रुमाणामोघञ्चासङ्ख्येयं वितीर्य कन्याधनत्वेनाराधयंश्च विविधोपचारैः प्रस्थापयांबभूव जामातृभिश्चक्रवर्तिनमयोध्यां कथञ्चिन्निगृह्णन्विश्लेषजनितमन्तरस्वास्थ्यमात्मविदां प्रथमः।

## ॥ भार्गवगर्वभङ्गः ॥

सुगुणां हृदयङ्गमस्वभावामनवद्यान्वयशालिनीं सुवृत्तां शुभवर्णपदामुज्ज्वलाङ्गीञ्च जानकीं सतीमिव कवितां प्राप्यापि प्रस्थितिसमये रामभद्रो व्यषीदद्दहर्षेर्विश्वामित्रस्य सर्वश्रेयःसमाधायकस्य विश्लेषमसहमानः श्वशुरस्य चात्मवतामनुत्तमस्य। दशरथः पथि निशम्य पतत्रिणां घोरतरं रुतं दृष्ट्वा च मृगानगच्छतः प्रदक्षिणमपशकुनोपनिपातत्रस्तमानसः पप्रच्छ वसिष्ठं किमेतदित्थमिति। स च राजन्मा भैषीर्यतः पक्षिमुखात्सूचितं भयमवश्यं भावि प्रशमयिष्यन्ति मृगा इति सान्त्वयामास। क्षणे च तस्मिन्ववौ संवर्तसमय इव समीरणो द्रुमाणां समूलमुत्पाट्य गणान्विनिपातयन्सर्वतः कम्पयंश्च पृथिवीम्। सञ्छन्नः सूर्यस्तमसा। नैव च प्रबभुःककुभः। भस्मना वृतं सर्वमभूद्बलमलं विमूढमृते वसिष्ठात्सर्षिगणाद्राज्ञश्च सुतैस्सहितात्। तदानीञ्जटामण्डलधारिणं भीमसङ्काशं कैलासमिव दुर्धर्षं काला

नलमिव दुःसहं तेजोभिर्ज्वलन्तं पृथग्जनैर्दुर्निरीक्षमीक्षाञ्चक्रिरे क्षत्रियकुलान्तकमन्धकरिपुसरूपं स्कन्धस्फुरदकुण्ठकठोरकुठारं दधतञ्च धनुर्विद्युद्गणोपमं पुरस्तादायान्तमतिगम्भीरं भार्गवं जामदग्न्यं भगवन्तम्। जपमानसहोमपरायणा बभूवुर्भिया विप्रा वसिष्ठमुखा राम रामेति मधुरामाम्रेडयन्तो व्याहृतिं निरन्तरं सर्वविपत्प्रशमनीं महामन्त्रायमाणामन्योन्यमुपांशु जजल्पुश्च पितृवधामर्ष्यैष कृतपूर्वराजन्यवधो विगतज्वरश्चातो नास्य भवेच्चिकीर्षितं पुनः क्षत्रियोत्सादनमिति। तावत्येव जवात्प्राप्तसमीपमाश्वर्घ्याद्यैराराधयामासुः ऋषयः ससंभ्रमम्। प्रतापवान्स भार्गवः प्रतिगृह्यार्हणां सत्वरमुपयन्नन्तिकमन्तकः क्षत्रियाणां प्रवरस्य रघुपरिवृढस्य समगिरत स्वसमाननामानमसहमान इव संबोधयन्रामेति साकूतं वीर्यमश्रौषमद्भुतं ते राम! धनुर्भेदश्च समुद्भूतमचिरादेव। तच्छ्रुत्वाहमभिप्राप्तस्त्वां परमेतच्छरासनं परिगृह्य शुभम्। तदिदं पूरयस्व शरेण शौर्यमात्मनः प्रदर्शयंस्तदन्वहं दृष्ट्वा बलमविकलं ते प्रदास्यामि द्वन्द्वयुद्धमपि तव वीर्यश्लाघार्हस्य। भीतो यदि धनुस्त्यजन्निर्जितोऽस्मीति वा वदन्कुर्वितः प्रस्थानमनुस्यूतमिति। श्रुत्वैतद्दशरथः प्रार्थयामास विषण्णवदनो दीनश्च विहिताञ्जलिः क्षत्ररोषात्प्रशान्तस्त्वमसि भगवन्ब्राह्मणः ख्यातप्रभावः पुत्राणामभयमर्भकाणां मेऽर्हसि विश्राणयितुं घृणया परिपूर्णः। स्वाध्यायव्रतशालिनां कुले जातस्त्वमसि भार्गवाणां, निक्षिप्तवानसि च सहस्राक्षे शस्त्रमितः परं न स्प्रक्ष्यामि नियतमिति कृतप्रतिश्रवः। स त्वं भूत्वा धर्मपरः कश्यपाय वितीर्णधरणिर्वनङ्गतः स्फुरसि महेन्द्राद्रिकृतनिकेतनः। सर्वविनाशायेव प्राप्तोऽसि महामुनेऽधुना। यतो हतेऽस्मित्रामे नैव जीवेम सर्वे वयमिति। तदेतत्समस्तं बत! बभूव विपिनविलपितं यदेतद्बधिरवदनाकर्णयन्नभ्यर्णमेवेयाय कौसल्यातनयस्य विनयैकनिलयस्य। क्रोधप्रस्फुरदधरः प्रोवाच तदिदं धनुर्वैष्णवं राम! रौद्रेण समानसारं शरासनेन सर्वात्मना। पैनाकन्तु भग्नं धनुर्भवता यद्देवराताय व्यतारि पार्वतीपतिना प्रसादितेन। ततोऽप्यधिकबलवत्त्वेन संभावितचरेऽस्मिन्दिविचरैश्चापे पद्मनाभस्य प्रदर्शय बलन्ते सकलम्। योऽयं परपुरञ्जयो जनार्दनचापोऽवापि न्यासत्वेन स्वयमृचीकेन भगवता। पश्चात्प्राप मे पितरं जमदग्निमग्निकल्पमृचीकात्मजम्। तपोबलसमृद्धे पितरि मम न्यस्तशस्त्रे कार्तवीर्यार्जुनः क्षुद्रबुद्धिरवधीत्। अशक्नुवन्सोढुमुदूढमिममपराधं क्रोधादुदसादयं क्षत्रं जातं जातमनेकशः। यज्ञान्ते समग्रां प्रदाय मेदिनीं दक्षिणात्वेन पुण्यकर्मणे कश्यपाय तप्यमानस्तपो वर्ते मरुत्वत्पर्वतमधिश्रितः। तदिदं राम! पितृपैतामहं महद्धनुर्वैष्णवं गृहाण क्षत्रियाणामनुसृत्य धर्ममिति। श्रुत्वा गिरं जामदग्न्यस्य पितुः सन्निधिगौरवान्नियन्त्रितोच्चवचनः प्रकृत्या सत्यपरित्राणपरतया परिमिताभिधानरमणीयः श्रीरामः, पितृघातिक्षत्रवधेन पितृवैरशुद्धिमास्थितस्त्वं यत्कर्मत्रिःसप्तकृत्वः कृतवानसि क्षत्रवधलक्षणं तदश्रौषम्। एकः पापमकृतेति तज्जात्युन्मथनं नैव साम्प्रतं विशिष्य ब्राह्मणस्य क्षमैकसारस्य तत्रापि तपःस्वाध्यायनित्यनिरतस्य च सतो मुनेःपुत्रस्य। भवतु तदपि कथञ्चिदनुरुन्ध्मः। क्षत्रधर्ममनुसृत्येत्यादिना वीर्यहीनमिव मत्वा मां यदवामंस्था भार्गव! तन्नैव क्षमामहे। पराक्रमं मेऽपरोक्षय कतिपयक्षुद्रक्षत्रियक्षपणमात्रसन्धुक्षितब्रह्मक्षममहौद्धत्यपराहतस्त्वमिति क्रुद्धः सद्यःसरभसं प्रतिगृह्य स्वयमेव तद्धस्ताल्लघुपराक्रमः शरमारोप्य कृत्वा धनुरधिज्यं व्याजहार। ब्राह्मणोऽसीति मे पूज्यः किञ्च पुत्रो भवति विश्वामित्रभगिन्यामृचीकात्सत्यवत्यां जातस्य भगवतो जमदग्ने रातश्च प्राणहरं मोक्तुं शरं त्वयि नाहमुत्सहे। नेयाच्छरोऽयं वैष्णवो जात्वपि वैफल्यम् सोद्धतामधुना निहन्यां पादगतिमथवा वद तपोबलसमार्जितांस्ते लोकानतुलानिति। तदानीं तादृशवरायुधधरं गदाधरमप्य

धरयितुमीश्वरं धरेश्वरकुमारं शौर्यैकवारिधिं गम्भीर्यसौभाग्याभ्यां युगपत्परिभास्वरं रघुकुलतिलकं पायं पायं विलोचनाभ्यामीयुर्नैव तृप्तिं पितामहपुरस्सरा सर्वेऽपि सुरासुराः सङ्गताः प्रमोमुद्यमानाः। हतौजा जामदग्न्यः क्षणान्निर्वीर्योऽवाङ्मुखः श्रीरामं द्रष्टुमप्यशक्नुवन्परशुरामः स्वयं द्विजत्वाद्भीतभीतः शरीरक्षतेः, क्षत्रियात्प्राप्तपराभवश्च स्वधर्मत्यागपरधर्मपरिग्रहाभ्यामतिभयङ्कराभ्यामभ्यधत्त काकुत्स्थम्। मा भवान्निरुन्धां गतिं पश्यतु मनोजवं गमिष्यामि महेन्द्राद्रिं ये मे लोकास्तपसार्जिता अनुत्तमा जहि तान्शरमुख्येन। अक्षयं लक्ष्मीकान्तं मधुहन्तारमवैमि भवन्तं भगवन्तं, परामर्शादस्य च धनुषस्ते स्वस्ति स्तात्। यन्मह्यमदिथाः पराक्रमं कार्यार्थमाराधितस्तपसा तमेवा धुना प्रत्यग्रहीः। ऋभुक्षप्रभृतय इमे निरीक्षन्ते त्वामप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे हविर्भुजः। नेयं व्रीडा भवितुमर्हति यदहं त्रैलोक्यैकनाथेन विमुखीकृतो भवता। शैवधनुर्भङ्गाच्छिवादिव नारायणादपि पारम्यमनेन निरुपचरितं निरुपमञ्च प्रादीदृशस्त्वं सर्वेश्वरस्त्वम्। राघव! मुञ्च शरं दृष्टशरलक्ष्यस्वार्जितलोकगतिर्गमिष्यामि महेन्द्रपर्वतमिति। प्रार्थनाञ्च जामदग्न्यस्य सफलयाञ्चकार तथेति रघूत्तमः। भक्तकृत्यं यत्सर्वस्वस्याप्यनुत्तमस्य परमात्मनि भगवति समर्पणं, तदेव स्वयमादर्शो भवन्भार्गवः प्रकाशयामास तपसार्जितान्समर्प्य लोकानात्मनो लोका भिरामाय रामाय त्यागिराजोऽयं द्विजराजः। गते च रामे रामो दाशरथिर्वितताार तद्धनुः [1]सशरं वरुणायाप्रमेयाय प्रमोदमानः। परशुरामकृतपरत्वप्रतिपादिकां स्तुतिं वरुणाय धनुर्दानञ्चाजानानो राजा दशरथश्च विज्वरः पुनर्जात मिव राममुत्पश्यन्प्रहृष्टः सेनाञ्चोदयन्पुरीमयोध्यां सर्वालङ्कारपरिभूषितामुपजगाम।

रामशरस्येदमसामान्यं प्राभवं यददृष्टफलसंबन्धध्वंसनमपीति।

# अयोध्यायां सीतारामयोः सुखेनावस्थानम्

पताकाध्वजसमुद्भ्राजितां तूर्यसमुद्धोषपरिबृंहितां सिक्तराजमार्गसुभगां प्रकीर्णकुसुमोत्किरां राजप्रवेशेन विकस न्मुखैःपूर्णां पौरनिकुरुम्बैः सकुटुम्बैः, प्रत्युद्व्रजद्भिः स्वस्तिवादमुखरैः स[1]पूर्णकुम्भं द्विजन्मनाञ्च समाजैः श्रीमान्प्रविवेश श्रीमतीं पुरीं श्रीमद्भिः परिवृतः कुमारैर्दशरथः। कौसल्या सुमित्रा च कैकेयी राजयोषाभिरितराभिः स्नुषाणा मुपचारपुरस्सरं स्वस्वान्तःपुरनयने व्यभानभिरताः। सर्वोपहारमेदुरकराम्बुरुहाः प्रपूज्यात्मजान्नृपजायास्तिस्रोपि जगृहुर्निरुपमसुषमाः स्नुषाश्चतस्रोऽपि चारुतराचाराः सच्चरित्राः समुचिताः समुपचितसम्पत्स्तोमाः। मङ्गलालापनैः शोभिताः क्षौमवाससश्च गत्वा देवतायतनानि पूजयाञ्चक्रिरे। अभिवाद्याथाभिवाद्यान्सर्वा राजकुमार्यस्तर्पयित्वा च गोभूधान्यहिरण्यवस्त्राभरणाद्यैर्धरणिगीर्वाणान्कुबेरसवनमासाद्य स्वं स्वं भवनं भवनमङ्गळदेवतायमानाः स्वैः स्वैर्भर्तृभिः सहिता मुदिता रेमिरे सुहिताश्च।

अप्रतिमप्रतापा महात्मानश्च पुत्राश्चत्वारः पितृशुश्रूषणपरा रराजुः सह सुहृज्जनैः प्रशंसद्भिः सद्भिरुदारप्रकृतयः कृतदाराः। गते च कस्मिंश्चित्काले स्वात्मानमभिवाद्य स्थितं पुरस्तात्कृताञ्जलिं श्यामं काममिवापरं रामसमाना

---

1. क्रियाविशेषणम्।

कारं कमलविलोचनमक्लिष्टकारिणमिष्टं गुणगणैरग्रगण्यं शूराणां भरतमवलोक्य विनयमिव संप्राप्तदेहयोगेन प्रेमार्द्रेणानुगृह्णन्नेत्रेण बभाण नृपाग्रणीर्दशरथोऽसावतिरथः सम्पूर्णमनोरथः ।

पुत्रक ! केकयराजपुत्रोऽयमत्र वसति युधाजिदतुलस्तव मातुलः वीर ! यस्त्वां नेतुमागतोऽनुमते स्थितस्ते मातामहस्य महात्मनः । तस्य त्वमिहार्हसि कर्तुं प्रीतिम् । यतस्तेनाहमृषिमध्ये प्रार्थितोऽस्म्यपि मिथिलमिति । तथेति भरतोऽभिवाद्य पितरं मातॄश्च गुरुं च रामचन्द्रं परिष्वज्य च लक्ष्मणमापृच्छ्य च सर्वाञ्जगाम साकं शत्रुघ्नेन मुदमातन्वानो युधाजितः । पितुराज्ञां मूर्धनि दधानो रामभद्रः प्रियाणि हितानि च पौरकार्याणि मातृभ्यो मातृकार्याणि गुरूणाञ्च गुरुकार्याणि काले काले तस्थौ प्रीत्या यन्त्रितात्मा निर्वर्तयन्निसर्गजार्जवसम्पूज्यः । सत्यपराक्रमः सर्वलोकाभिरामो रामो धर्मात्मा बभूव स्वयम्भूरिव गुणवत्तरो भूतानाम् । वैषयिकानन्दानुभवपरां काष्ठामधिरोढुकामोऽयं रघुपरिवृढः तदानीं द्वादशहायनोऽप्यप्राकृतदिव्यविग्रहवत्त्वादक्षीणतारुण्यसम्पत्समृद्धः षडब्दयाप्ययोनिजत्वादसमानमुदूढप्रौढिमसमुद्द्योतितमधिगम्य दिव्यं किमपि यौवनं भ्राजमानया सह जनकजया तत्तद्वतुसमुचितभोगोपकरणैरक्षीणैः सङ्कल्पातिशायिभोगस्रोतःप्रवर्तकतया सभाजितो विजहार [1]बह्वृतून्मनस्वी तस्या हृदि नित्यं समर्पितः । सीतापि रामकृततत्तत्प्रेमकृत्यपरवशीकृता तदायत्तचित्ता नित्यं सुचिरं भोगेऽपि सद्यः सङ्गच्छमानेव निरुपमनिरवधिकप्रेमभरभरिता व्यद्योतत । न परं दाराः पितृकृता इति रामस्य सीतायां प्रीतिः किन्तु रूपोच्चयेन गुणैरौदार्याद्यैरयोनिजत्वाभिजात्यादिभिश्चेति भूयस्तरामभ्यवर्धत । परस्परहृदयमेव स्वस्वानुरागप्रकाशनपरं व्यजयत । इत्थं तावुभौ शुभौ दम्पती सीतारामौ बभतुस्तरां साक्षाल्लक्ष्मीनारायणाविवेति हयमेधमहमणिमण्टपमध्यासीनावगायतां कुशलवौ कुशीलवाविति सकलमनाविलम् ॥

ॐ तत्सत्



1. द्वादशसमा इति निष्कर्षः ।

## ॥ शुद्धपत्र ॥

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| 3 | 13 | र्यामिनः | र्यामिणः |
| ,, | 27 | रत्नाकरमिवापरं | रत्नाकरमिवापरंस्वं दर्शयत् |
| 5 | 9 | चतुर्विंशत् | तुर्विंशति |
| ,, | 14 | अवाङ्गनस | अवाङ्मनस |
| ,, | 18 | कोऽन्विदं | कोन्विदं |
| ,, | 19 | सध्रयञ्चौ | सध्र्यञ्चौ |
| 6 | 25 | श्रृङ्गारिणान्म | श्रृङ्गारिणाम |
| 7 | 1 | दीर्घिकानां | दीर्घिकाणां |
| ,, | 16 | सङ्कलाभिः | सङ्कुलाभिः |
| 8 | 2 | कीडद्भिः | क्रीडद्भिः |
| ,, | 3 | फूर्ज | भूर्ज |
| ,, | 8 | परिघा | परिखा |
| 11 | 4 | उझिहानः | उज्जिहान |
| 12 | 13 | जिह्वयां | जिह्वयां |
| ,, | 16 | स्वाभि | स्वामि |
| 13 | 17 | सध्रयञ्चौ | सध्र्यञ्चौ |
| 15 | 4 | वारणान्तरा | वारणा |
| ,, | 16 | दृष्टवो | दृष्ट्वो |
| ,, | 17 | गर्मिणी | गर्भिणी |
| ,, | 21 | दध्युस्ता | दधुस्ता |
| 17 | 20 | संविदध्वं | संविधध्वं |
| 18 | 2 | यक्ष्माणो | यक्ष्यमाणो |
| ,, | 9 | संविदधत | संविधत्त |
| 19 | 13 | स्त्रिबाल | स्त्रीबाल |
| ,, | 24 | एकविंशद्भिः | एकविंशत्या |
| 20 | 16 | आयुष्टाम | आयुष्टोम |
| 21 | 1 | अतिक्रमते | अतिक्रामति |
| 22 | 3 | एतस्य | एतस्या |
| ,, | 12 | मेधाविनंमन्यः | मेधाविनंमन्यमानःस्वं |
| 23 | 4 | पापः | पाप्मा |
| 26 | | हृदयोद्वग | हृदयोद्वेग |
| ,, | 5 | विपश्चिज्ञान | विपश्चिन्ज्ञान |
| ,, | 21 | नैःऋत | नर्ऋत |
| 27 | 10 | भवतो | भवतः |
| 28 | 4 | ज्ञायशा | शयज्ञान |
| 28 | 8 | साम्यामव | समाव |
| ,, | 15 | अन्तर्यामिना | अन्तर्यामिणा |
| ,, | 22 | नैःऋत | नैर्ऋत |
| 29 | 2 | सुप्तिं | सुप्तेः |
| 30 | 1 | समुक्त | समुत्क |
| ,, | 23 | प्रेमार्भक इव | प्रेमार्भकस्येव |
| 31 | 11 | प्रमदावनेषु | प्रमदवनेषु |
| 32 | 17 | विद्यांवि | विद्यावि |
| 33 | 19 | त्वैरं | स्वैरं |
| ,, | 24 | ईर्षा | ईर्ष्या |
| 34 | 11 | द्वेषभवना | द्वेषभावना |
| 35 | 25 | अभिप्रेमि | अभिप्रैमि |
| ,, | 26 | प्रहृष्यस्तां | प्रहृष्यंस्तां |
| 36 | 3 | प्रह्वोऽत्या | प्रह्वोऽत्य |
| 38 | 17 | अयाध्या | अयोध्या |
| 39 | 9 | वर्षस | वर्षश |
| ,, | 26 | विश्रुतचरान् | विश्रुतचरान्प्रति |
| 40 | 5 | एकाहृति | एकाहुति |
| ,, | 7 | स्कन्ध | स्कन्धं |
| ,, | 20 | त्वमश्वि | त्वमश्वी |
| 41 | 1 | पूव | पूर्व |
| ,, | 12 | कयंरा | कयरा |
| 42 | 13 | मकुर्व | अकुर्व |
| ,, | 9 | मीप्गे | मीष्मे |
| 43 | 14 | गणाख्य | यणाख्यं |
| 45 | 9 | मन | मनस |
| ,, | 1 | दरभर | दरमरं |
| ,, | 7 | मर्त्यश्च | मत्यश्च |
| 46 | 21 | युवतिवे | युवतिच्चे |
| 47 | 2 | पच | पञ्च |
| ,, | 7 | म्श्च | म्यश्च |
| 48 | 27 | क्तना | क्ताना |
| 49 | 10 | सामुद्रिका | सामुद्रिक |
| 50 | 1 | पूर्व | पूर्व |
| ,, | 2 | कीशे | कोशे |

| पृष्ठम् | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| 50 | 3 | सत्करादि | सत्कारादि |
| " | 7 | दर्शन | दर्शनं |
| " | 14 | स्वामिन्स्ता | स्वामिंस्ता |
| ,, | 15 | अप्रजस्त्र | अप्रजसः |
| " | " | प्रणष्ट | प्रनष्ट |
| " | 1 | समुनु | समनु |
| " | 7 | अपाक्रमे | अपाक्रामं |
| " | 11 | सामर्थ्य | समर्थ |
| " | " | मान्य | मान्यं |
| 51 | 15 | शंशयित | संशयित |
| 52 | 21 | प्रापः | प्राप्तः |
| 53 | 9 | निर्नीति | निर्णीति |
| 55 | 17 | क्रमीयमान | क्रमीयमाण |
| " | 18 | सन्दोष्ट | सन्दष्टोष्ठ |
| " | 24 | श्चिकीर्षन् | चिकीर्षन् |
| 56 | 1 | ग्रमाना | ग्रमना |
| " | 6 | आत्मान | आत्मानं |
| " | 11 | त्रिंष्वपि | त्रिष्वपि |
| " | 28 | णाङ्ग | णाङ्ग |
| 58 | 12 | वहित | वहितं |
| " | " | नैःऋत | नैर्ऋत |
| " | 13 | नश्चय | निश्चये |
| 59 | 7 | प्रणष्ट | प्रनष्ट |
| " | ,, | त्सति | त्स्यति |
| ,, | 21 | न्लि | न्मि |
| 60 | 7 | शंसतुः | शशंसतुः |
| ,, | ,, | उपांसु | उपांशु |
| ,, | 20 | वहते | वहति |
| 62 | 15 | रुदन्तीं | रुदतीम् |
| ,, | 17 | देवैः | देवैः |
| 63 | 11 | वंशा | वांशा |
| 64 | 21 | मानव | मानवं |
| 65 | 3 | सस्पृ | संस्पृ |
| 66 | 7 | स्फर | स्फुर |
| ,, | 23 | वशायि | वशयि |
| 68 | 14 | नङ्क्षव्य | नङ्क्षय |
| ,, | 26 | मम्य | गम्य |
| 70 | 4 | ह्विक | ह्निक |
| 71 | 12 | श्वया | श्वर्या |
| 72 | 15 | ग्राहया | ग्राम्या |
| ,, | ,, | यासा | याऽसा |
| ,, | ,, | स्वर्गङ्ग | स्वर्गङ्ग |
| 74 | 4 | लोकायि | लोकयि |
| ,, | 8 | पर्ति | पर्तिप्रति |
| 75 | 13 | भृति | प्रभृति |
| ,, | " | अप्रजाः | अप्रजसः |
| ,, | " | दुर्मेधे | दुर्मेधो |
| ,, | 20 | तप्यमानः | तपस्यन् |
| ,, | 21 | युदु | यदु |
| 76 | 1 | वयव्या | वयवव्या |
| ,, | 28 | विस्तरः | सविस्तरः |
| 78 | 19 | स्मय | स्मयं |
| ,, | 27 | मान | मानं |
| ,, | 29 | सीघ्र | शीघ्र |
| 79 | 22 | शासन्द्रा | शासद्रा |
| ,, | 26 | तप्यामानं | तपस्तप्यमानं |
| 80 | 11 | अपा | अप |
| ,, | 18 | वन्त्य | वत्या |
| ,, | 24 | ङ्क्ष | ङ्क्ष |
| 81 | 13 | द्दह | दह |
| ,, | 14 | व | इव |
| ,, | ,, | त्वा | त्वो |
| ,, | 19 | व्योम | व्योमम |
| 82 | 9 | गङ्गां | गङ्गा |
| ,, | 10 | अनुजग्मुः | जग्मुः |
| ,, | 21 | टास्य | ठास्य |
| ,, | 23 | मद्भया | भद्भया |
| 83 | 3 | ननन्द | नन्द |
| ,, | 5 | स्विका | स्विक |
| ,, | ,, | गङ्गया | गङ्गाया |
| ,, | 6 | पश्य | पश्य |
| ,, | 12 | रांशि | रांसि |
| ,, | 25 | पृथ्वी | पृथ्वी- |
| 84 | 4 | कोस्य | कोस्त्य |

| पुटम् | पङ्क्तिः | अशुद्धिः | शुद्धिः | पुटम् | पङ्क्तिः | अशुद्धिः | शुद्धिः |
|---|---|---|---|---|---|---|---|
| 84 | 11 | यायाश्च | याश्च | 95 | 5 | स्या | स्यां |
| ,, | 14 | मुभगा | सुभगा | 96 | 7 | जिन | जिनः |
| ,, | 19 | सुखात् | मुखात् | ,, | 9 | शेपं | शेफं |
| 85 | 22 | हुनि | हुनिं | 97 | 12 | तप्यमानस्य | तपस्यतः |
| ,, | 1 | ज्ञयप | श्यप | ,, | 20 | ककुमाः | क्कुमः |
| ,, | 3 | नृग्र | नुग्र | 99 | 1 | सीत | सीते |
| ,, | 15 | मुमोद | मुमुदे | ,, | 18 | स्तनू | स्तान् |
| ,, | 17 | शङ्गि | सङ्गि | ,, | 19 | रोपण | रोपणं |
| 6 | 26 | सुषु | सुष | 100 | 8 | ज्ञाता | ज्ञता |
| 87 | 20 | मौत | गौत | ,, | 16 | ऐश्वर | ऐश्वरम |
| 88 | 9 | तापि | तापा | ,, | 18 | त्यन्सं | त्यन्तसं |
| ,, | 10 | यामिनः | यामिणः | 101 | 1 | शौर्ये | शौर्य |
| ,, | 21 | देवयत् | देवयत | ,, | 8 | कुलल | कुल |
| ,, | 26 | न्तव | न्तर्व | ,, | 13 | कथ | कथं |
| ,, | ,, | चन्दम | चन्द्रम | 103 | 6 | णान्द्वयां | णाम्यां |
| 89 | 2 | स्मृत्था | स्मृत्वा | ,, | 11 | ययि | मयि |
| ,, | 13 | क्षणभा | क्षमा | ,, | 22 | एकाह्ना | एकाहेन |
| 90 | 12 | रामया | रामाय | 104 | 11 | षयस्त्व | र्षयंस्त्व |
| ,, | 13 | शक | शक्र | ,, | 15 | निर्वर्वि | विर्वर्ति |
| 91 | 2 | भर्तुभु | भर्तुर्भु | ,, | 17 | निर्नी | निर्णी |
| ,, | 10 | इतेति | एतेति | ,, | 21 | स्वर | स्वैर |
| 92 | 25 | स्तद | तद | ,, | 22 | सुभ | सुभग |
| 93 | 2 | प्रावाहे | प्रवाहे | 105 | 4 | ट्मल | ड्मल |
| ,, | 7 | हास्त्र | हास्त्र | 108 | 3 | आम्रेड्य | आम्रेडय |
| ,, | 19 | अत्यक्रमत | अत्यकामत् | 109 | 9 | ष्यमि | ष्यामि |
| 95 | 2 | अर्हर्येति | अर्हयेति | ,, | 15 | अदष्ठ | अदष्ट |

# AUTHOR'S OTHER WORKS

1. PRAKRITI VILASA KAVYA
2. STAVARATNATRAYAM
3. SATICHARITAM
4. TRIPURABHARANAM
5. RAMARAJYAM
6. GOPEE GOVINDAM (Drama)
7. MANJOOSHA VYAKHYA
8. BHARATASUPRABHATAM
9. SWATANTRABHARATODAYAM
10. RAMAYANA GEETAM.

Rathnam Press, Madras - 1.